न सा भार्येति वक्तव्या यस्या भर्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां संतुष्टाः सर्वदेवताः ॥ १९७ ॥

ततो यद्यदादिशति मे प्राणेश्वरस्तदेवाहमविचारितं करोमि ।' दूत्योक्तम्—'सत्यमेतत् ।' लावण्यवत्युवाच—ध्रुवं सत्यमेवैतत् ।' ततो दूत्या गत्वा तत्सर्वं तुङ्गबलस्याग्रे निवेदितम् । तच्छ्रुत्वा 5
तुङ्गबलोऽब्रवीत्—'स्वामिनानीय समर्पयितव्येति कथमेतच्छक्यम् ।' कुट्टन्याह—'उपायः क्रियताम् । तथा चोक्तम्—

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
सृगालेन हतो हस्ती गच्छता पङ्कवर्त्मनि' ॥ १९८ ॥

राजपुत्रः पृच्छति—'कथमेतत् ।' सा कथयति— 10

## कथा ८ ।

अस्ति ब्रह्मारण्ये कर्पूरतिलको नाम हस्ती । तमवलोक्य सर्वे सृगालाश्चिन्तयन्ति स्म—'यद्ययं केनाप्युपायेन म्रियते तदास्माकमेतद्देहेन मासचतुष्टयस्य भोजनं भविष्यति ।' तत्रैकेन वृद्धसृगालेन प्रतिज्ञातम्—'मया बुद्धिप्रभावादस्य मरणं साधयितव्यम् ।' 15 अनन्तरं स वञ्चकः कर्पूरतिलकसमीपं गत्वा साष्टाङ्गपातं प्रणम्योवाच—'देव, दृष्टिप्रसादं कुरु ।' हस्ती ब्रूते—'कस्त्वम् ? । कुतः समायातः ।' सोऽवदत्—'जम्बुकोऽहम् । सर्वैर्वनवासिभिः पशुभिर्मिलित्वा भवत्सकाशं प्रस्थापितः । यद्विना राज्ञावस्थातुं न युक्तं । तदत्राटवीराज्येऽभिषेक्तुं भवान्सर्वस्वामि- 20
गुणोपेतो निरूपितः । यतः ।

यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान् ।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि ॥ १९९ ॥

अपरं च पश्य ।

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
5 राजन्यसति लोकेऽस्मिन्कुतो भार्या कुतो धनम् ॥२००॥

अन्यच्च ।

पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ २०१ ॥

नियतविषयवर्ती प्रायशो दण्डयोगा-
10 ज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः ।
कृशमपि विकलं वा व्याधितं वाधनं वा
पतिमपि कुलनारी दण्डभीत्याभ्युपैति ॥ २०२ ॥

तद्यथा लग्नवेला न विचलति तथा कृत्वा सत्वरमागम्यतां देवेन ।' इत्युक्त्वोत्थाय चलितः । ततोऽसौ राज्यलोभाकृष्टः
15 कर्पूरतिलकः शृगालवर्त्मना धावन्महापङ्के निमग्नः । ततस्तेन हस्तिनोक्तम्—'सखे शृगाल, किमधुना पङ्के निपतितोऽहं म्रिये । परावृत्य पश्य ।' शृगालेन विहस्योक्तम्—'देव, मम पुच्छकावलम्बनं कृत्वोत्तिष्ठ । यन्मद्विधस्य वचसि त्वया प्रत्ययः कृतस्तदनुभूयतामशरणं दुःखम् । तथा चोक्तम्—

20 यदा सत्सङ्गरहितो भविष्यसि भविष्यसि ।
तदाऽसज्जनगोष्ठीषु पतिष्यासि पतिष्यासि' ॥ २०३ ॥

ततो महापङ्के निमग्नो हस्ती शृगालैर्भक्षितः । अतोऽहं ब्रवीमि—
'उपायेन हि यच्छक्यम्' इत्यादि ॥ ततः कुट्टन्युपदेशेन तं
चारुदत्तनामानं वणिक्पुत्रं स राजपुत्रः सेवकं चकार । ततोऽसौ
तेन सर्वविश्वासकार्येषु नियोजितः ।

एकदा तेन राजपुत्रेण स्नातानुलिप्तेन कनकरत्नालंकारधारिणा 5
प्रोक्तम्—'अद्यारभ्य मासमेकं गौरीव्रतं कर्तव्यम् । तदत्र प्रति-
रात्रमेकां कुलीनां युवतीमानीय समर्पय । सा मया यथोचितेन
विधिना पूजयितव्या ।' ततः स चारुदत्तस्तथाविधां नवयुवती-
मानीय समर्पयति । पश्चात्प्रच्छन्नः सन्किमयं करोतीति निरूप-
यति । स च तुङ्गबलस्तां युवतीमस्पृशन्नेव दूराद्वस्त्रालंकारगन्ध- 10
चन्दनैः संपूज्य रक्षकं दत्त्वा प्रस्थापयति । अथ वणिक्पुत्रेण तद्-
दृष्टोपजातविश्वासेन लोभाकृष्टमनसा स्ववधूर्लावण्यवती समानीय
समर्पिता । स च तुङ्गबलस्तां हृदयप्रियां लावण्यवतीं विज्ञाय स-
संभ्रमसमुत्थाय निर्भरमालिङ्ग्य निमीलिताक्षः पर्यङ्के तया सह वि-
ललास । तदालोक्य वणिक्पुत्रश्चित्रलिखित इवेतिकर्तव्यतामूढः 15
परं विषादमुपगतः । अतोऽहं ब्रवीमि—'स्वयं वीक्ष्य' इत्यादि ॥
तथा त्वयापि भवितव्यम्' इति । तद्धितवचनमवधीर्य महता
भयेन विमुग्ध इव तं जलाशयमुत्सृज्य मन्थरश्चलितः । तेऽपि
हिरण्यकादयः स्नेहादनिष्टं शङ्कमाना मन्थरमनुगच्छन्ति । ततः
स्थले गच्छन्केनापि व्याधेन काननं पर्यटता मन्थरः प्राप्तः । प्राप्य 20
तं गृहीत्वोत्थाप्य धनुषि बद्ध्वा भ्रमन्क्लेशात्क्षुत्पिपासाकुलः स्व-
गृहाभिमुखं चलितः । अथ मृगवायसमूषिकाः परं विषादं
गच्छन्तस्तमनुजग्मुः । ततो हिरण्यको विलपति—

'एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥ २०४ ॥

5 स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते ।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥ २०५ ॥

न मातरि न दारेषु न सोदर्ये न चात्मजे ।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे' ॥ २०६ ॥

इति मुहुर्विचिन्त्य 'अहो दुर्दैवम् । यतः ।

10 स्वकर्मसंतानविचेष्टितानि
कालान्तरावर्तिशुभाशुभानि ।
इहैव दृष्टानि मयैव तानि
जन्मान्तराणीव दशान्तराणि ॥ २०७ ॥

अथवेत्थमेवैतत् ।

15 कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम्' ॥ २०८ ॥

पुनर्विमृश्याह—

'शोकारातिभयत्राणं प्रीतिविस्रम्भभाजनम् ।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम् ॥ २०९ ॥

20 किं च ।

मित्रं प्रीतिरसायनं नयनयोरानन्दनं चेतसः
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम् ।

ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत्' ॥२१०॥

इति बहु विलप्य हिरण्यकश्चित्राङ्गलघुपतनकावाह—'यावदयं व्याधो वनान्न निःसरति तावन्मन्थरं मोचयितुं यत्नः क्रियताम्।' तावूचतुः—'सत्वरं कार्यमुच्यताम्।' हिरण्यको ब्रूते—'चित्राङ्गो 5 जलसमीपं गत्वा मृतमिवात्मानं दर्शयतु। काकश्च तस्योपरि स्थित्वा चञ्च्वा किमपि विलिखतु। नूनमनेन लुब्धकेन तत्र कच्छपं परित्यज्य मृगमांसार्थिना सत्वरं गन्तव्यम्। ततोऽहं मन्थरस्य बन्धनं छेत्स्यामि। संनिहिते लुब्धके भवद्भ्यां पलायितव्यम्।' चित्राङ्गलघुपतनकाभ्यां शीघ्रं गत्वा तथानुष्ठिते सति स 10 व्याधः श्रान्तः पानीयं पीत्वा तरोरधस्तादुपविष्टस्तथाविधं मृगमपश्यत्। ततः कर्तरिकामादाय प्रहृष्टमना मृगान्तिकं चलितः। तत्रान्तरे हिरण्यकेनागत्य मन्थरस्य बन्धनं छिन्नम्। स कूर्मः सत्वरं जलाशयं प्रविवेश। स मृग आसन्नं तं व्याधं विलोक्योत्थाय पलायितः। प्रत्यावृत्य लुब्धको यावत्तरुतलमायाति 15 तावत्कूर्ममपश्यन्नचिन्तयत्—'उचितमेवैतन्ममासमीक्ष्यकारिणः। यतः।

यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि' ॥ २११ ॥

ततोऽसौ स्वकर्मवशान्निराशः कटकं प्रविष्टः। मन्थरादयः सर्वे 20 मुक्तापदः स्वस्थानं गत्वा यथासुखमास्थिताः॥

अथ राजपुत्रैः सानन्दमुक्तम्—'सर्वे श्रुतवन्तः सुखिनो वयम्। सिद्धं नः समीहितम्।' विष्णुशर्मोवाच—'एतावता भवतामभिलषितं संपन्नम्। अपरमपीदमस्तु—

मित्रं प्राप्नुत सज्जना जनपदैर्लक्ष्मीः समालम्ब्यतां
5 भूपालाः परिपालयन्तु वसुधां शश्वत्स्वधर्मे स्थिताः।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुतां जनस्य भगवांश्चन्द्रार्धचूडामणिः' ॥२१२॥

इति हितोपदेशे मित्रलाभो नाम प्रथमः कथासंग्रहः समाप्तः।



अथ राजपुत्रा ऊचुः—'आर्य मित्रलाभः श्रुतः, तद्वय-मिदानीं सुहृद्भेदं श्रोतुमिच्छामः ।' विष्णुशर्मोवाच—'सुहृद्भेदं शृणुत । यस्यायमाद्यः श्लोकः—

वर्धमानो महान् स्नेहो मृगेन्द्रवृषयोर्वने । 5
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः' ॥ १ ॥

राजपुत्रैरुक्तम्—'कथमेतत् ?' विष्णुशर्मा कथयति—

अस्ति दक्षिणापथे सुवर्णवती नाम नगरी । तत्र वर्धमानो नाम वणिङ्निवसति । तस्य प्रभूतेऽपि वित्ते परान्बन्धूनतिसमृद्धानव-लोक्य पुनरर्थवृद्धिः करणीयेति मतिर्बभूव । यतः । 10

अधोऽधः पश्यतः कस्य महिमा नोपचीयते ।
उपर्युपरि पश्यन्तस्सर्व एव दरिद्रति ॥ २ ॥

अपरं च ।

ब्रह्महाऽपि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते ॥ ३ ॥ 15

अन्यच्च ।

अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीणम् ।
प्रमदेव पतिं वृद्धं नेच्छति लक्ष्मीरुपगूहितुमीषदपि ॥ ४ ॥

किं च ।

आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् । 20
भीरुत्वमसन्तोषः षड्व्याघाता महत्त्वस्य ॥ ५ ॥

यतः ।

संपदा सुस्थितंमन्यो भवति स्वल्पयाऽपि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ ६ ॥

अपरं च ।

5 निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥ ७ ॥

तथा चोक्तम्—

अलब्धं चैव लिप्सेत लब्धं रक्षेदपेक्षया ।
रक्षितं वर्धयेत् सम्यग्वृद्धं तीर्थेषु निक्षिपेत् ॥ ८ ॥

10 दानभोगविहीनाश्च दिवसा यान्ति यस्य वै ।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति ॥ ९ ॥

यतः, लब्धमिच्छतोऽर्थयोगादर्थस्य प्राप्तिरेव । लब्धस्याप्यरक्षितस्य निधेरपि स्वयं भवति विनाशः । अवर्ध्यमानश्चार्थस्स्वल्पव्ययोऽप्यञ्जनवत् क्षयमेति । अनुपभुज्यमानश्च निष्प्रयोजन एव ।

15 तथा चोक्तम्—

धनेन किं यन्न ददाति नाश्नुते
बलेन किं यश्च रिपून्न बाधते ।
श्रुतेन किं येन न धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो भवेत् ॥ १० ॥

20 अन्यच्च ।

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य तु सञ्चयम् ।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु ॥ ११ ॥

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः
स हेतुस्सर्वविद्यानां धर्मस्य च धनस्य च ॥ १२ ॥

इति संचिन्त्य संजीवकनन्दकनामानौ द्वौ वृषभौ धुरि नियुज्य, शकटं नानाविधद्रव्यपूर्णं कृत्वा वाणिज्यार्थं काश्मीरं चलितः । यतः ।

कोऽतिभारस्समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशस्सविद्यानां कः परः प्रियवादिनाम् ॥ १३ ॥

ततो गच्छतस्तस्य सुदुर्गनाम्नि महारण्ये पर्वते संजीवको भग्नजानुर्निपतितः । तमालोक्य वर्धमानोऽचिन्तयत्—

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः । 10
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ १४ ॥

किं तु ।

विस्मयस्सर्वथा हेयः प्रत्यूहस्सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्ये सिद्धिर्विधीयताम् ॥ १५ ॥

इति संचिन्त्य संजीवकं तत्र परित्यज्य वर्धमानः पुनः स्वयं धर्मपुरं नाम नगरं गत्वा महाकायमन्यं वृषभमेकं समानीय धुरि नियोज्य चलितः । 15

संजीवकः कथमपि चरणत्रये भरं कृत्वोत्थितः । यतः ।

निमग्नस्य पयोराशौ पर्वतात्पतितस्य च ।
तक्षकेणाऽपि दष्टस्य आयुर्मर्माणि रक्षति ॥ १६ ॥ 20

अपरं च

निपततु शिखराद्द्रे-
मज्जतु जलधौ हुताशनं विशतु ।
क्रीडतु भुजङ्गमैर्वा
5 नाकाले कस्यचिन्नाशः ॥ १७ ॥

नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
शूकाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति ॥ १८ ॥

यतः ।

अरक्षितं तिष्ठति दैवरक्षितं
10 सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १९ ॥

ततो दिनेषु गच्छत्सु संजीवकः स्वेच्छाहारादिलाभेनारण्यानि भ्राम्यन् हृष्टपुष्टाङ्गो बलवन्ननाद । तस्मिन्वने पिङ्गलकनामा 15 सिंहः स्वभुजोपार्जितराज्यसुखमनुभवन्निवसति । तथा चोक्तम्—

नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ २० ॥

स चैकदा पिपासाकुलितः पानीयं पातुं यमुनाकच्छमगमत् । तेन च तत्र सिंहेनाननुभूतपूर्वं प्रलयघनगर्जितमिव संजी- 20 वकनर्दितमश्रावि । तच्छ्रुत्वाऽसौ पानीयमपीत्वा सचकितं परिवृत्य, स्वस्थानमागत्य, किमिदमित्यालोच्य, तूष्णीं स्थितः । स यथाविधः करटकदमनकाभ्यां मन्त्रिपुत्राभ्यां सृगालाभ्यां दृष्टः,

तं तथाविधं दृष्ट्वा दमनकः करटकमाह—'सखेऽयं किमुदकार्थी स्वामी पानीयमपीत्वा मन्दं मन्दमवतिष्ठते ।' करटको ब्रूते—'मित्र दमनक, मम सम्मतेनास्य सेवैव न क्रियते । तत्किमस्य चेष्टानिरूपणेन ? अतोऽनेन राज्ञाऽवधीरिताभ्यामावाभ्यां महादुःखमनुभूतम् । 5

अपरं च ।

सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २१ ॥

अपरं च ।

शीतवातातपक्लेशान् सहन्ते ये पराश्रिताः । 10
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥ २२ ॥

अन्यच्च ।

एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ २३ ॥
क्रीडन्ति भुजगैस्सार्धं रमन्ते परयोषितः । 15
राजानमपि सेवन्ते अहो ! साहसिका नराः ॥ २४ ॥

अपरं च ।

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ २५ ॥

किं च । 20

अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम् ।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥ २६ ॥

किं च ।

या प्रकृत्यैव चपला निपतत्यशुचावपि ।
स्वामिनो बहुमन्यन्ते दृष्टिं तामपि सेवकाः ॥ २७ ॥

विशेषतश्च ।

5 प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान् ।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ' ॥ २८ ॥

अपरं च ।

मौनान्मूर्खः प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः ।
10 धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ २९ ॥

दमनकोऽब्रवीत्—' मित्र, सर्वथा मनसाऽपि नैतत्कर्तव्यम् ।

कथं त्वया न सेव्यन्ते यत्नतः परमेश्वराः ।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥ ३० ॥

15 अन्यच्च ।

कुतस्सेवाविहीनानां चामरोद्धूतसंपदः ।
उद्दण्डधवलच्छत्रवाजिवारणवाहिनी ' ॥ ३१ ॥

करटको ब्रूते—तथाऽपि किमनेन व्यापारेणास्माकम् । यतः ।
अव्यापारेषु व्यापारः सर्वथा परिहरणीयः । पश्य ।

20 अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति ।
स भूमौ निहतश्शेते कीलोत्पाटीव वानरः ' ॥ ३२ ॥

दमनकः पृच्छति—' कथमेतत् ? ' स कथयति—

## कथा १ ।

पुरा मगधदेशे धर्मारण्यसंनिहितवसुधायां शुभदत्तनाम्ना कायस्थेन विहारमण्डपं कारयितुमारब्धम् । तत्र करपत्रविदार्यमाणैकस्तम्भस्य कियद्दूरपाटितस्य काष्ठखण्डद्वयमध्ये कीलकं सूत्रधारेण स्थापितम् । तत्र वनवासी महावानरयूथः क्रीडन्नागतः । तेष्वेको वानरः कालदण्डप्रेरित इव तं कीलकं हस्ताभ्यां धृत्वोपविष्टः । ततस्तस्य वृषणद्वयं लम्बमानं काष्ठखण्डद्वयाभ्यन्तरे प्रविष्टम् । अनन्तरं स च सहजचपलतया महता प्रयत्नेन तं कीलकमाकृष्टवान् । आकृष्टे सति काष्ठाभ्यां चूर्णिताण्डद्वयः पञ्चत्वं गतः । अतोऽहं ब्रवीमि—'अव्यापारेषु व्यापारं' इत्यादि ॥

दमनको ब्रूते—'तथाऽपि स्वामिचेष्टानिरूपणं सेवकेनावश्यमेव कर्तव्यम् ।' करटको ब्रूते—'यः सर्वाधिकारे नियुक्तः प्रधानमन्त्री स करोतु । यतोऽनुजीविना पराधिकारचर्चा न कर्तव्या । पश्य ।

पराधिकारचर्चां यः कुर्यात्स्वामिहितेच्छया ।
स विषीदति चीत्कारात्ताडितो गर्दभो यथा' ॥ ३३ ॥

दमनकः पृच्छति—'कथमेतत् ?' करटकः कथयति—

## कथा २ ।

अस्ति वाराणस्यां कर्पूरपटो नाम रजकः । स चैकदाऽभिनववयस्कया कान्तया सह चिरात्केलिं कृत्वा निर्भरमालिङ्ग्य प्रसुप्तः । तदनन्तरं तद्गृहद्रव्याणि हर्तुं तद्गृहे चोरः प्रविष्टः । तस्य प्राङ्गणे गर्दभो बद्धस्तिष्ठति । कुक्कुरश्चोपविष्टः । अथ गर्दभः श्वानमाह—

'तव तावदयं व्यापारः। तत्किमिति त्वमुच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि?' कुक्कुरो ब्रूते—'मम नियोगस्य चर्चा त्वया न कर्तव्या। त्वमेव किं न जानासि? यथा तस्याहर्निशं गृहरक्षां करोमि। ततोऽयं चिरान्निर्वृतो ममोपयोगं न जानाति। तेनाधुना ममाहारदानेऽपि मन्दादरः। यतो विना विधुरदर्शनं स्वामिनोऽनुजीविषु मन्दादरा भवन्ति। गर्दभो ब्रूते—'शृणु रे बर्बर, स्वभावतः श्वजातिरस्पृश्या। पुनरपि सेवकजातिस्त्वम्। तच्च।

याचते कार्यकाले यस्स किंभृत्यः स किंसुहृत्।
तस्मिन् कार्ये विनष्टे तु भृत्येन सुहृदा किमु' ॥ ३४ ॥

कुक्कुरो ब्रूते—

'यस्तु संभावयेद्भृत्यान्कार्यकाले स किंप्रभुः।
सर्वथा किं न कर्तव्यं पोषणं भृत्यभार्ययोः ॥ ३५ ॥

यतः।

आश्रितानां भृतौ स्वामिसेवायां धर्मचिन्तने।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहन्तकाः' ॥ ३६ ॥

ततो गर्दभः सकोपमाह—'पापीयांस्त्वं, यद्विपत्तौ स्वामिकार्योपेक्षां करोषि। भवतु। यथा स्वामी जागर्ति तथा मया कर्तव्यम्। यतः।

पृष्ठतस्सेवयेदर्कं जठरेण हुताशनम्।
स्वामिनं सर्वभावेन परलोकममायया ॥ ३७ ॥

इत्युक्त्वा सोऽतीव चीत्कारशब्दं कृतवान् । रजकस्तेन चीत्कारेण प्रबुद्धो निद्राभङ्गकोपादुत्थाय गर्दभं लगुडेन ताडयामास । तथा चासौ पञ्चत्वमगमत् । अतोऽहं ब्रवीमि—'पराधिकारचर्चाम्' इत्यादि ॥ पश्य । पशूनामन्वेषणमस्माकं नियोगः । स्वनियोगचर्चा क्रियताम् । (विमृश्य ।) किंत्वद्य तया चर्चया न प्रयोजनम् । 5
यत आवयोर्भक्षितशेषाहारः प्रचुरोऽस्ति । दमनकः सरोषमाह—'कथमाहारमात्रार्थी भवान् राजानं सेवते? नैतद्युक्तमुक्तम् । यतः ।

सुहृदामुपकारकारणा-
द्विषतामप्यपकारकारणात् । 10
नृपसंश्रय इष्यते बुधै-
र्जठरं को न बिभर्ति केवलम् ॥ ३८ ॥

जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः ।
सफलं जीवितं तस्य आत्मार्थे को न जीवति ॥ ३९ ॥

अपि च । 15

यस्मिन् जीवति जीवन्ति बहवः स तु जीवतु ।
काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ४० ॥

पश्य ।

पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः ।
कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते ॥ ४१ ॥ 20

अन्यच्च ।

मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम् ।
प्रथमो यो न तत्रापि सोऽपि जीवत्सु गण्यते ॥ ४२ ॥

तथा चोक्तम् ।

वाजिवारणलोहानां काष्ठपाषाणवाससाम् ।
नारीपुरुषतोयानामन्तरं महदन्तरम् ॥ ४३ ॥

तथा च ।

5 अल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थि गोः
श्वा लब्ध्वा परितोषमेति न च तत्तस्य क्षुधश्शान्तये ।
सिंहो जम्बुकमङ्कमागतमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम् ॥४४॥

अपरं च पश्य सेवकयोरन्तरम् ।

10 लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुंगवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ४५ ॥

किं च ।

15 यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानविक्रमयशोभिरभग्नमानम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥४६॥

अपरं च ।

20 अहिताहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः
पुरुषपशोश्च पशोश्च को विशेषः ?' ॥ ४७ ॥

करटको ब्रूते—'आवां तावदप्रधानौ । तदावयोः किमनया विचारणया?' दमनकः पुनराह—'कियता कालेनामात्यः प्रधानतामप्रधानतां वा लभेत? यतः ।

न कस्यचित्कश्चिदिह स्वभावा-
द्भवत्युदारोऽभिमतः खलो वा । 5
लोके गुरुत्वं विपरीततां वा
स्वचेष्टितान्येव नरं नयन्ति ॥ ४८ ॥

किं च ।

आरोप्यते शिला शैले यत्नेन महता यथा ।
निपात्यते क्षणेनाधस्तथाऽऽत्मा गुणदोषयोः ॥ ४९ ॥ 10
यात्यधोऽधो व्रजत्युच्चैर्नरः स्वैरेव कर्मभिः ।
कूपस्य खनिता यद्वत्प्राकारस्येव कारकः ॥ ५० ॥

तद्भद्र स्वयत्नायत्तो ह्यात्मोत्कर्षः' करटको वदति । अथ भवान् किं ब्रवीति?' दमनक आह—'अयं तावत् स्वामी पिङ्गलकः कुतोऽपि कारणात् सचकितं परिवृत्योपविष्टः ।' करटको ब्रूते— 15
'किं तत्त्वं जानासि?' दमनको वदति—'किं प्रज्ञावतामविदितमस्ति? उक्तं च ।

उदीरितोऽर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति देशिताः ।
अनुक्तमप्यूहति पण्डितो जनः 20
परेङ्गितज्ञानफला हि बुद्धयः ॥ ५१ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।

नेत्रवक्त्रविकारेण लक्ष्यतेऽन्तर्गतं मनः ॥ ५२ ॥

तदत्र भयप्रस्तावेनाहमेनं प्रज्ञाबलेनात्मीयं करिष्यामि । यतः ।

प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम् ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः' ॥ ५३ ॥

5 करटको वदति—'सखे, त्वं सेवानभिज्ञः । पश्य ।

अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते ।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः' ॥ ५४ ॥

दमनको ब्रूते—'भद्र, कथमहं सेवानभिज्ञः । यतः ।

किमप्यस्ति स्वभावेन सुन्दरं वाऽप्यसुन्दरम् ।
10 यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥ ५५ ॥

यतः ।

यस्य यस्य हि यो भावस्तेन तेन हितं नरम् ।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥ ५६ ॥

अन्यच्च ।

15 कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च ।
आज्ञामवितथां कुर्याद्यथाशक्ति महीपते ॥ ५७ ॥

अपरं च ।

आज्ञाभङ्गो नरेन्द्राणां ब्राह्मणानामनादरः ।
पृथक्छय्या च नारीणामशस्त्रविहितो वधः ॥ ५८ ॥

20 किं च ।

अल्पेषु धृतिमान् प्राज्ञश्छायेवानुगतः सदा ।
आदिष्टो न विकल्पेन स राजवसतौ वसेत्' ॥ ५९ ॥

करटको ब्रूते—'कदाचित्त्वामनवसरप्रवेशादवमन्यते स्वामी'। दमनक आह—'अस्त्वेवम्। तथाऽप्यनुजीविना सान्निध्यमवश्यं करणीयम्। यतः।

दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम्।
कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥ ६० ॥ 5

पश्य।

आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसंगतं वा।
प्रायेण भूमिपतयः प्रमदा लताश्च
यः पार्श्वतो वसति तं परिवेष्टयन्ति' ॥ ६१ ॥ 10

करटको ब्रूते—'तत्र गत्वा किं वक्ष्यसि' स आह—'शृणु। अनुरक्तो विरक्तो वा मयि स्वामीति ज्ञास्यामि।' करटको ब्रूते—किं तत् ज्ञानलक्षणम्?' दमनको ब्रूते—'शृणु।

दूरादवेक्षणं हासः संप्रश्नेष्वादरो भृशम्।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु ॥ ६२ ॥ 15
तत्सेवकेऽनुरक्तिश्च दानं सप्रियभाषणम्।
अनुरक्तेशचिह्नानि दोषेऽपि गुणसंग्रहः ॥ ६३ ॥
कालयापनमाशानां वर्धनं फलखण्डनम्।
विरक्तेश्वरचिह्नानि जानीयान्मतिमान्नरः ॥ ६४ ॥

ज्ञात्वा चैतद् यथा चायं ममायत्तो भविष्यति तथा वक्ष्यामि। 20
यथा—

अपायसंदर्शनजां विपत्ति-
मुपायसंदर्शनजां च सिद्धिम्।

मेधाविनो नीतिविधिप्रयुक्तां
पुनः स्फुरन्तीमिव दर्शयन्ति ॥ ६५ ॥

करटको ब्रूते—'तथाऽप्यप्रस्तावे न वक्तुमर्हसि । यतः ।

अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन् ।
5 प्राप्नुयाद्बुद्ध्यवज्ञानमवमानं च शाश्वतम् ॥ ६६ ॥
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः' ॥ ६७ ॥

दमनकोऽब्रवीत्—'मित्र, मा भैषीः । नाहमप्राप्तावसरं वचनं वक्ष्यामि । यतः ।

10 आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥ ६८ ॥

यदि च प्रस्तावावसरेणापि मया मन्त्रो न वक्तव्यः । तदा मन्त्रित्वमेव ममानुपपन्नम् । यतः ।

कल्पयति येन वृत्तं येन च लोके प्रशस्यते सद्भिः ।
15 स गुणस्तेन च गुणिना संरक्ष्यो वर्धनीयश्च ॥ ६९ ॥

तद्भद्रानुजानीहि माम् । गच्छामि ।' करटको ब्रूते—शुभमस्तु । शिवास्ते पन्थानः । यथाभिलषितमनुष्ठीयताम् ।'

ततो दमनको विस्मित इव पिङ्गलकसमीपं गतो दूरादेव राज्ञा दृष्टः सादरं प्रवेशितः साष्टाङ्गपातं प्रणिपत्योपविष्टः ।
20 राजाऽऽह—'चिराद्दृष्टोऽसि ?'

दमनको ब्रूते—'यद्यपि मया सेवकेन श्रीमद्देवपादानां न किंचित्प्रयोजनमस्ति, तथाऽपि प्राप्तकालमनुजीविना सान्निध्यमवश्यं कर्तव्य' मित्यागतोऽस्मि । यतः ।

यैश्चाहवेषु शितशस्त्रनिपातभिन्न-
मातङ्गतुङ्गसुरभिस्सततार्पिता भूः ।
तेषामपि प्रभुसमीपमुपागतानां
वाचः स्खलन्ति गुरुसाध्वसभावभिन्नाः ॥ ७० ॥

अपरं च । 5

राजनि विदुषां मध्ये
वरसुरतसमागमे स्त्रीणाम् ।
साध्वसदूषितहृदयो
वाक्पटुरपि कातरो भवति ॥ ७१ ॥

इह हि केनचिदपि हेतुना प्रयोजनमस्ति । तथा चोक्तम्— 10

दन्तस्य निर्घर्षणकेन राजन्
कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां
किमङ्ग वाक्पाणिमता नरेण ? ॥ ७२ ॥

यद्यपि स्वामिना चिरावधीरितस्य मे बुद्धिविनाशः शङ्क्यते, तदपि 15
न मन्तव्यम् । यतः ।

यस्य ये च गुणास्सन्ति विकसन्ति हि ते स्वयम् ।
न हि कस्तूरिकामोदश्शपथेन निवार्यते ॥ ७३ ॥

अपरं च ।

मणिर्लुठति पादेषु काचश्शिरसि धार्यते । 20
क्रयविक्रयवेलायां काचः काचो मणिर्मणिः ॥ ७४ ॥

कदर्थितस्यापि च धैर्यवृत्ते
　　बुद्धेर्विनाशो न हि शङ्कनीयः ।
अधःकृतस्यापि तनूनपातो
　　नाधःशिखा याति कदाचिदेव ॥ ७५ ॥

5 देव, सर्वथा विशेषज्ञेन स्वामिना भवितव्यम् ।

निर्विशेषो यदा राजा समं सर्वेषु वर्तते ।
तदोद्यमसमर्थानामुत्साहः परिहीयते ॥ ७६ ॥

त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेत्तथैवैतांस्त्रिविधेष्वेव कर्मसु ॥ ७७ ॥

10 यतः ।

स्थान एव हि युज्यन्ते भृत्याश्चाभरणानि च ।
नहि चूडामणिः पादे नूपुरो न च मूर्धनि ॥ ७८ ॥

अपि च ।

कनकभूषणसंग्रहणोचितो
15　　यदि मणिस्त्रपुणि प्रणिधीयते ।
न स विरौति न चापि न शोभते
　　भवति योजयितुर्वचनीयता ॥ ७९ ॥

अन्यच्च ।

मुकुटे रोपितः काचश्चरणाभरणे मणिः ।
20 नहि दोषो मणेरस्ति किं तु साधोरविज्ञता ॥ ८० ॥

पश्य ।

बुद्धिमाननुरक्तोऽयमयं शूर इतो भयम् ।
इति भृत्यविचारज्ञो भृत्यैरापूर्यते नृपः ॥ ८१ ॥

तथा हि ।

अश्वश्शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्य भवन्ति योग्या अयोग्याश्च ॥ ८२ ॥

अन्यच्च ।

किं भक्तेनासमर्थेन किं शक्तेनापकारिणा । 5
भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥ ८३ ॥

यतः ।

अवज्ञानाद्राज्ञो भवति मतिहीनः परिजन-
स्ततस्तत्प्रामाण्याद्भवति न समीपे बुधजनः ।
बुधैस्त्यक्ते राज्ये नहि भवति नीतिर्गुणवती 10
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ८४ ॥

अपरं च ।

जनं जनपदा नित्यमर्चयन्ति नृपार्चितम् ।
नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥ ८५ ॥

किं च । 15

बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः ।
रवेरविषये किं न प्रदीपस्य प्रकाशनम् ?' ॥ ८६ ॥

पिङ्गलको ब्रूते—'भद्र दमनक, किमेतत् ? त्वमस्माकं प्रधानामात्यपुत्रः । एतावन्तं कालं पिशुनवचनान्नागतोऽसि । इदानीं यथाभिमतं ब्रूहि ।' दमनको ब्रूते—'देव, पृच्छामि किंचित् ।' पिङ्गलकः—'उच्यताम्'। उदकार्थी स्वामी पानीयमपीत्वा किं विस्मित इवागतास्तिष्ठति ?' पिङ्गलकोऽवदत्—'भद्रमुक्तं त्वया । किंत्वेतद्रहस्यं वक्तुं काचिद्विश्वासभूमिर्नास्ति । तथाऽपि

निभृतं कृत्वा कथयामि । शृणु । संप्रति वनमिदमपूर्वसत्त्वाधिष्ठितम् । अतोऽस्माकं त्याज्यम् । अनेन हेतुना विस्मितोऽस्मि । तथा च श्रुतो मयाऽपि महानपूर्वशब्दः । शब्दानुरूपेणास्य प्राणिनो महता बलेन भवितव्यम् ।' दमनको ब्रूते—'देवास्ति
5 तावदयं महाभयहेतुः शब्दोऽस्माभिरप्याकर्णितः । किं तु स किंमन्त्री यः प्रथमं भूमित्यागं पश्चाद्युद्धं चोपदिशति । अपरं च । अस्मिन् कार्यसंदेहे भृत्यानामुपयोग एव ज्ञातव्यः । यतः ।

बन्धुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः ।
आपन्निकषपाषाणो नरो जानाति सारताम् ' ॥ ८७ ॥

10 सिंहो ब्रूते—'भद्र, महती शङ्का मां बाधते ।' दमनकश्चिन्तयामास स्वगतम्—'अन्यथा राज्यसुखं परित्यज्य स्थानान्तरं गन्तुं कथं मां संभाषसे ।' प्रकाशं ब्रूते—'देव, यावदहं जीवामि, तावद्भयं न कर्तव्यम् । किंतु करटकादयोऽप्याश्वास्यन्ताम् । यस्मादापत्प्रतीकाराय दुर्लभः पुरुषसमवायः ।' ततस्तौ दमनक-
15 करटकौ राज्ञा महाप्रसादेन पूजितौ भयप्रतीकारं प्रतिज्ञाय चलितौ ।

करटको गच्छन् दमनकमाह—'सखे, किं शक्यप्रतीकारो भयहेतुरशक्यप्रतीकारो वेत्यज्ञात्वा भयोपशमं प्रतिज्ञाय कथमयं महाप्रसादो गृहीतः ? यतोऽनुपकुर्वाणो न कस्याप्युपायनं गृह्णीयात् । विशेषतो राज्ञः । पश्य ।

20 यस्य प्रसादे पद्माऽऽस्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो नृपः ॥ ८८ ॥

तथा हि ।

बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति' ॥ ८९ ॥

दमनको विहस्याह—'मित्र, तूष्णीमास्यताम् । ज्ञातं मया भयकारणं बलीवर्दनर्दितम् । तद्रूपभाश्चास्माकमपि भक्ष्याः । किं पुनः 5 सिंहस्य ?' करटको ब्रूते—'यद्येवं तर्हि स्वामित्रासस्तत्रैव नापनीतः ?' दमनको ब्रूते—'यदि स्वामित्रासस्तत्रैव मुच्यते तदा कथमयं महाप्रसादलाभः स्यात् ? अपरं च ।

निरपेक्षो न कर्तव्यो भृत्यैस्स्वामी कदाचन ।
निरपेक्षं प्रभुं कृत्वा भृत्यस्स्याद्दधिकर्णवत्' ॥ ९० ॥ 10

करटकः पृच्छति—'कथमेतत्' । दमनकः कथयति—

## कथा ३ ।

अस्त्युत्तरापथेऽर्बुदशिखरनाम्नि पर्वते महाविक्रमनामा सिंहः । तस्य पर्वतकन्दरे शयानस्य केसराग्रं मूषिकश्छिनत्ति । ततः केसराग्रं लूनं दृष्ट्वा कुपितो विवरान्तर्गतं मूषिकमलभमानोऽचिन्तयत्— 15

क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्नैव लभ्यते ।
तमाहन्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥ ९१ ॥

इत्यालोच्य नगरं गत्वा दधिकर्णनामानं बिडालमानीय मांसोपहारादिना संतोष्य बिलसमीपे स्थापितवान् । अनन्तरं तद्भयान्मूषिकोऽपि न बहिर्निस्सरति । तेनासौ सिंहोऽक्षतकेशस्सुखं 20 स्वपिति । मूषकशब्दं यदा यदा शृणोति तदा तदा मांसाहार-

दानेन तं बिडालं संवर्धयति । अथैकदा स मूषिकः क्षुधापीडितो बहिस्संचरन् मार्जारेण प्राप्तो व्यापादितश्च । अनन्तरं स सिंहोऽनेककालं यावन्मूषिकं न पश्यति, तत्कृतरावमपि न शृणोति, तदा तस्यानुपयोगाद्बिडालस्याहारदाने मन्दादरो बभूव । अतोऽहं 5 ब्रवीमि—‘निरपेक्षो न कर्तव्य’ इत्यादि ।

ततो दमनककरटकौ संजीवकसमीपं गतौ । तत्र करटकस्तरुतले साटोपमुपविष्टः । दमनकः संजीवकसमीपं गत्वाऽब्रवीत्—‘अरे वृषभ, एष त्वां राज्ञा पिङ्गलकेनारण्यरक्षार्थं सेनापतिर्नियुक्तः करटकः समाज्ञापयति । सत्वरमागच्छ । न 10 चेदस्मादरण्याद्दूरमपसर । अन्यथा ते विरुद्धं फलं भविष्यति । न जाने क्रुद्धः स्वामी किं विधास्यति ? ततो देशव्यवहारानभिज्ञः संजीवकः सभयमुपसृत्य साष्टाङ्गपातं करटकं प्रणतवान् । तथा चोक्तम्—

मतिरेव बलाद्गरीयसी
15 यदभावे करिणामियं दशा ।
इति घोषयतीव डिण्डिमः
करिणो हस्तिपकाहतः क्वणन् ॥ ९२ ॥

अथ संजीवकः साशङ्कमाह—‘सेनापते, किं मया कर्तव्यम् । तदभिधीयताम् ।’ करटको ब्रूते—‘वृषभ, यद्यत्र कानने 20 स्थातुमिच्छा वर्तते, तदा देवपादारविन्दं प्रणम ।’ संजीवको वदति—‘तदभयवाचं मे यच्छ । गच्छामि ।’ करटकेनोक्तम्—‘शृणु रे बलीवर्द, अलमनया शङ्कया । यतः ।

प्रतिवाचमदत्त केशवः
शपमानाय न चेदिभूभृते ।
अनु यः कुरुते घनध्वनिं
न हि गोमायुरुतानि केसरी ॥ ९३ ॥

अपरं च ।

तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणतानि सर्वतः ।
समुच्छ्रितानेव तरून्प्रबाधते
महान्महत्येव करोति विक्रमम्' ॥ ९४ ॥

ततस्तौ संजीवकं नातिदूरे संस्थाप्य पिङ्गलकसमीपं गतौ 10
प्रणम्योपविष्टौ । राजाऽऽह—'त्वया स दृष्टः ?' दमनको ब्रूते—'देव दृष्टो विनीतश्च कृतः । किं तु महाबलोऽसौ । यथा देवेन ज्ञातम् । तथाऽप्यसौ देवपादान् द्रष्टुमिच्छति । ततः सज्जीभूयोपविश्यताम् । यतः ।

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः । 15
पैशुन्याद्भिद्यते स्नेहो वाग्भिर्भेद्यो हि कातरः ॥ ९५ ॥

तत्र शब्दमात्रान्न भेतव्यम् । यतः ।

शब्दमात्रान्न भेतव्यमज्ञात्वा शब्दकारणम् ।
शब्दहेतुं परिज्ञाय कुट्टिनी गौरवं गता' ॥ ९६ ॥

राजाऽऽह—'कथमेतत् ।' दमनकः कथयति— 20

## कथा ४ ।

अस्ति श्रीपर्वतमध्ये ब्रह्मपुराख्यं नगरम् । तत्र शैलशिखरे घण्टाकर्णनामा राक्षसः प्रतिवसतीति जनप्रवादः श्रूयते । एकदा

घण्टामादाय पलायमानः कश्चिच्चोरो व्याघ्रेण व्यापादितः। खादितश्च। तत्पाणिपतिता घण्टा वानरैः प्राप्ता। ते वानरास्तां घण्टामनुक्षणं वादयन्ति। ततो नगरजनैः स मनुष्यः खादितो दृष्टः। प्रतिदिनं घण्टावाद्यं च श्रूयते। अनन्तरं 'घण्टाकर्णः
5 कुपितो मनुष्यान् खादति, घण्टां च वादयति' इत्युक्त्वा सर्वे जना नगरं त्यक्त्वा पलायिताः। ततः कुट्टिन्या मर्कटो घण्टां वादयतीति परिज्ञाय राजा विज्ञापितः—'देव, यदि धनव्ययः क्रियते, तदाऽहमेनं घण्टाकर्णं साधयामि।' ततस्तस्यै प्रचुरं धनं दत्तम्। ततस्तया तद्वनं प्रविश्य तरुतले फलानि तण्डुलानि च
10 भूमौ निक्षिप्तानि। ततो वानरा घण्टां परित्यज्य फलासक्ता बभूवुः। घण्टां गृहीत्वा कुट्टिनी नगरमागता सर्वपूज्याऽऽसीत्। अतोऽहं ब्रवीमि—'शब्दमात्रान्न भेतव्यम्' इति।

ततः संजीवक आनीय दर्शनं कारितः। पश्चात्तत्रैव वने चिरमतिप्रीतो वसति।

15 अथ कदाचित्तस्य सिंहस्य भ्राता स्तब्धकर्णो नाम समागतः। तस्यातिथ्यं कृत्वा समुपवेश्य पिङ्गलकस्तदाहाराय पशुं हन्तुं चलितः। अत्रान्तरे संजीवको वदति—'देवाद्य हतमृगाणां मांसानि क्व?' राजाऽऽह—'दमनककरटकौ जानीतः।' संजीवको ब्रूते—'ज्ञायतां किमस्ति नास्ति वा।' सिंहो विहस्याह—
20 'नास्त्येव तत्।' संजीवको ब्रूते—'कथमेतावन्मांसं ताभ्यां खादितम्?' राजाऽऽह—'खादितं व्ययितमवधीरितं च। प्रत्यहमेष क्रमः।' संजीवको ब्रूते—'कथं श्रीमद्देवपादानां गोचरेणैवं

क्रियते ?' राजाऽऽह—'मदीयागोचरेणैव क्रियते ।' संजीवको ब्रूते—'नैतदुचितम् । तथा चोक्तम्—

नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम् ।
कार्यमापत्प्रतीकारादन्यत्र जगतीपते ॥ ९७ ॥

अन्यच्च । 5

कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः ।
नृपते किंक्षणो मूर्खो दरिद्रः किंवराटकः ॥ ९८ ॥
स ह्यमात्यस्सदा श्रेयान् काकिणीं यः प्रवर्धयेत् ।
कोशः कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः ॥ ९९ ॥
किं चान्यैर्न कुलाचारैस्सेव्यतामेति पूरुषः । 10
धनहीनः स्वपत्न्याऽपि त्यज्यते किं पुनः परैः ॥१००॥

एतच्च राज्ञः प्रधानं दूषणम्—

अतिव्ययोऽनवेक्षा च तथाऽर्जनमधर्मतः ।
मोक्षणं दूरसंस्थानं कोशव्यसनमुच्यते ॥ १०१ ॥

यतः । 15

क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया ।
परिक्षीयत एवासौ धनी वैश्रवणोपमः ॥ १०२ ॥

तदाकर्ण्य स्तब्धकर्णो ब्रूते—शृणु भ्रातः । चिराश्रितावेतौ दमनक-करटकौ संधिविग्रहकार्याधिकारिणौ, न कदाचिदर्थाधिकारे नि-योक्तव्यौ । अपरं च नियोगप्रस्तावे यन्मया श्रुतं तत् कथ्यते । 20

ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते ।
ब्राह्मणस्सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति ॥ १०३ ॥

नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवं ।
सर्वार्थं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः ॥ १०४ ॥
अपराधेऽपि निश्शङ्को नियोगी चिरसेवकः ।
स स्वामिनमवज्ञाय चरेच्च निरवग्रहः ॥ १०५ ॥
5 उपकर्ताऽधिकारस्थः स्वापराधं न मन्यते ।
उपकारं ध्वजीकृत्य सर्वमेवावलुम्पति ॥ १०६ ॥
उपांशु क्रीडितोऽमात्यः स्वयं राजायते यतः ।
अवज्ञा क्रियते तेन सदा परिचयाद्ध्रुवम् ॥ १०७ ॥
अन्तर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल ।
10 शकुनिश्शकटारश्च दृष्टान्तावत्र भूपते ॥ १०८ ॥
सदामात्यो न साध्यः स्यात् समृद्धः सर्व एव हि ।
सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी ॥ १०९ ॥
प्राप्तार्थग्रहणं द्रव्यपरिवर्तोऽवरोधनम् ।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम् ॥ ११० ॥
15 नियोग्यर्थग्रहोपायो राज्ञां नित्यं परीक्षणं ।
प्रतिपत्तिप्रदानं च तथा कर्मविपर्ययः ॥ १११ ॥
निपीडिता वमन्त्युच्चैरन्तस्सारं महीपतौ ।
दुष्टव्रणा इव प्रायो भवन्ति हि नियोगिनः ॥ ११२ ॥
मुहुर्नियोगिनो बाध्या वसुधारां महीपतेः ।
20 सकृत्किं पीडितं स्नानवस्त्रं मुञ्चेद्घृतदकम् ॥ ११३ ॥

एतत्सर्वं ज्ञात्वा यथावसरं व्यवहर्तव्यम् ।' सिंहो ब्रूते—'अस्ति तावदेवम् । किं त्वेतौ सर्वथा न मम वचनकरौ ।' स्तब्धकर्णो ब्रूते—'एतत्सर्वमनुचितं । यतः ।

आज्ञाभङ्गकरान्राजा न क्षमेत् स्वसुतानपि ।
विशेषः को नु राज्ञश्च राज्ञश्चित्रगतस्य वा ॥ ११४ ॥

स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टेन्द्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं 5
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ११५ ॥

विशेषतश्च ।

तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात् ।
नृपतिर्निजलोभाच्च प्रजा रक्षेत् पितेव हि ॥ ११६ ॥

भ्रातः, सर्वथा मद्वचनं क्रियताम् । आहारोऽप्यद्यास्माभिः कृत एव । 10
अयं सस्यभक्षकः संजीवको भोजनाधिकारे नियुज्यताम् ।' एत-
द्वचनात्तथाऽनुष्ठिते सति, पिङ्गलकसंजीवकयोः सर्वबन्धुपरित्यागेन
महता स्नेहेन कालोऽतिवर्तते ।

ततोऽनुजीविनामप्याहारदाने शैथिल्यदर्शनाद्दमनककरटका-
वन्योन्यं चिन्तयतः । दमनक आह—'किमत्रावधेयम् ? आत्म- 15
कृतोऽयं दोषः । स्वयं कृतेऽपि दोषे परिदेवनमप्यनुचितम् । तथा
चोक्तम्—

स्वर्णरेखामहं स्पृष्ट्वा बद्ध्वाऽऽत्मानं च दूतिका ।
आदित्सुश्च मणिं साधुः स्वदोषाद्दुःखिता इमे ॥ ११७ ॥

करटको ब्रूते—'कथमेतत् ?' दमनकः कथयति— 20

## कथा ५ ।

अस्ति काञ्चनपुरनाम्नि नगरे वीरविक्रमनामा राजा । तस्य धर्माधिकारिणा कश्चिन्नापितो वध्यभूमिं नीयमानः कन्दर्पकेतुनाम्ना परिव्राजकेन साधुद्वितीयकेन 'नायं हन्तव्य' इत्युक्त्वा
5 वस्त्राञ्चले धृतः । राजपुरुषा ऊचुः—'किमिति नायं वध्यः ?' स आह—'श्रूयताम् ।' 'स्वर्णरेखामहं स्पृष्ट्वे' त्यादि पठति । त आहुः—'कथमेतत् ?' परिव्राजकः कथयति ।

अहं सिंहलद्वीपस्य भूपतेर्जीमूतकेतोः पुत्रः कन्दर्पकेतुः । एकदा केलीकाननावस्थितेन मया पोतवणिङ्मुखाच्छ्रुतम्—
10 'यदत्र समुद्रमध्ये चतुर्दश्यामाविर्भूतकल्पद्रुमतले रत्नावलीकिरणकर्बुरपर्यङ्के स्थिता, सर्वालंकारभूषिता, लक्ष्मीरिव वीणां वादयन्ती कन्या काचिद्दृश्यत' इति । ततोऽहं पोतवणिजमादाय पोतमारुह्य तत्र गतः । अनन्तरं तत्र गत्वा पर्यङ्केऽर्धमग्ना तथैव साऽवलोकिता । ततस्सा सखीसमेता समुद्रमध्ये मग्नाऽदृश्याऽभ-
15 वत् । ततस्तल्लावण्यगुणाकृष्टेन मया प्राप्तबुद्ध्या झम्पो दत्तः । तदनन्तरं कल्पतरोः शाखामाकृष्य तस्याः कनकपत्तनं प्राप्य सुवर्णप्रासादे, तथैव सा पर्यङ्कस्था विद्याधरीभिरुपास्यमाना मयाऽऽलोकिता । तया चाहं दूरादेव दृष्ट्वा सखीं प्रस्थाप्य सादरं संभाषितः । ततस्तत्सख्या च मया पृष्टया समाख्यातम्—'एषा
20 कन्दर्पकेलिनाम्नो विद्याधरचक्रवर्तिनः पुत्री रत्नमञ्जरी नाम । अनया प्रतिज्ञा विहिता । यः कनकपत्तनं स्वचक्षुषाऽऽगत्य पश्यति, स एव पितुर्गोचरेण मां परिणेष्यतीति । तदिमां गान्धर्व-

विवाहेन परिणयतु भवान् ।' अथ गान्धर्वविवाहे वृत्ते तया सहाहं रममाणश्चिरं तिष्ठामि । तत एकदा रहसि तयोक्तम्—'स्वामिन्, सर्वदा स्वेच्छया सर्वमिदमुपभोक्तव्यम् । किं त्वेषा चित्रगता स्वर्णरेखा नाम विद्याधरी न कदाचिदपि स्प्रष्टव्या'। ततस्तद्वचनादुपजातकौतुकेन मया स्वर्णरेखा स्तनमण्डले स्पृष्टा । 5
तया च चित्रगतयाऽप्यहं तथा चरणपङ्कजेन हतः यथागत्य स्वराष्ट्रे पतितः ।

अथ दुःखार्तोऽहं प्रव्रजितः पृथिवीं भ्राम्यन्निमां नगरीमनुप्राप्तः । अत्र चास्तं गते रवौ प्रविशन्निवासन्नगोपगृह आवासं प्रार्थितवान् । तेन च निजगेहस्यैकदेशोऽनुज्ञातः । कथिता च 10
गृहिणी 'यावदहमागच्छामि तावदयं यथा भद्रेण तिष्ठति तथा करिष्यसि' इत्युक्त्वा स गतः । अथ तस्य भार्या पुंश्चली दूत्या सह मन्त्रयन्ती यावदवतिष्ठते तावत्तस्याः पतिर्गोष्ठादागतः । स गोपः स्ववधूं मन्त्रयन्तीं दूत्या सहापश्यत् । सा गोपी पतिमालोक्य प्रत्युत्पन्नमतिर्निर्भृता मन्दिराभ्यन्तरे शयनाद्यकल्पयत् । 15
ततस्तां गोपस्ताडयित्वा स्तम्भे बद्ध्वा सुप्तः । ततोऽर्धरात्रे एतस्या दूती नापितवधूः पुनरागता तां गोपीमुवाच—'तव वियोगानलदग्धोऽसौ मुमूर्षुर्वर्तते महानुभावः । तथा चोक्तम्—

रजनीचरनाथेन खण्डिते तिमिरे निशि ।
यूनां मनांसि विव्याध दृष्ट्वा दृष्ट्वा मनोभवः ॥ ११८ ॥ 20

तदहमात्मानमत्र बद्ध्वा तिष्ठामि । त्वं तत्र गत्वा तं संभाष्य सत्वरमागच्छ ।' तथाऽनुष्ठिते सति, स गोपः प्रबुद्धोऽवदत्—

'इदानीं जारान्तिकं न यासि कथम्?' ततश्चेयं दूती न किंचिद्ब्रवीति। तदा 'दर्पादुत्तरमात्रं न ददासि' इत्युक्त्वा प्रकुपितेन गोपेन तस्या नासिका छिन्ना। स पुनः सुप्तः। अनन्तरमागता सा गोपी दूतीमपृच्छत्—'का वार्ता?' 5 दूत्युवाच—'पश्य मे मुखम्। मम नासिकैव वार्तां कथयति।' अनन्तरं सा गोपी तथैवात्मानं बद्ध्वाऽवस्थिता। दूती छिन्ननासिकां गृहीत्वा निजगृहमुपगतवती विषादं भावयन्ती स्थिता।

ततः प्रातरनेन नापितेन क्षुरभाण्डे याचिते सति सा क्षुरभाण्डमदत्त्वा क्षुरमेकं प्रादात्। पश्चादयं नापितः प्रकुपितः, क्षुरं 10 दूरादेव गृहे प्रक्षिप्तवान्। अथ कर्तितनासिकेयं 'विनाऽपराधेनानेन मम नासिका छिन्ना' इत्युक्त्वा धर्माधिकारिसमीपमेनमानीतवती।

सा च गोपी तेन गोपेन पृष्टोवाच—'अरे पाप, को मां महासतीं विरूपयितुं समर्थः? मम व्यवहारमकल्मषमष्टौ 15 दिक्पाला एव जानन्ति। यतः।

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
उभे च सन्ध्ये रजनी दिनं च
धर्मश्च जानाति नरस्य वृत्तम्॥ ११९॥

20 ततोऽहं यदि महासती, निजस्वामिनं विहाय नान्यं मनसाऽपि चिन्तयामि, तदा मम मुखमक्षतं भवतु।' ततो यावदसौ गोपः

प्रदीपमादाय तन्मुखमक्षतमपश्यत्, तावदेव 'क्षम्यतां ममापराध' इत्युक्त्वा प्रदक्षिणं परिभ्रम्य हृष्टहृदयो बन्धनाद्विमुच्य तच्चरणयोः पतित्वोवाच—'धन्योऽहं यस्येदृशी सती भार्या ।' यतः ।

> मधु तिष्ठति वाचि योषितां हृदि हालाहलमेव केवलम् । 5
> अत एव निपीयतेऽधरो हृदयं मुष्टिभिरेव ताड्यते ॥

अस्य साधोरपि वार्तां शृणुत राजपुरुषाः । अयं गृहान्निःसृत्य द्वादशभिर्वर्षैर्वाणिज्यं कृत्वा मलयोपकण्ठान्नाना दुर्लभानि रत्नान्यादायेमां नगरीमागतः । अत्र वेश्यागृहे सुप्तः । ततः कुट्टिन्या गृहद्वारि स्थापितस्य काष्ठघटितवेतालस्य मूर्ध्नि रत्नमेकमत्युत्कृष्टमास्ते । तदृष्ट्वाऽथ लुब्धेन साधुना रात्रावुत्थाय हस्तो यदा रत्ने दत्तः, तदैव तेन वेतालेन सूत्रसंचारिताभ्यां बाहुभ्यां पीडितः सन्नार्तनादं चकार । पश्चादुत्थाय कुट्टिन्योक्तम्—'साधो पुत्र, मलयोपकण्ठादागतोऽसि । तत्सर्वरत्नानि प्रयच्छ । न चेदनेन न त्यक्तव्योऽसि । इत्थमेवायं चेटकः ।' ततोऽनेन सर्वरत्नानि समर्पितानि । अधुना चायमपि हृतसर्वस्वोऽस्माभिर्मिलितः ।

एतत्सर्वं श्रुत्वा राजपुरुषैर्न्याये धर्माधिकारी प्रवर्तितः । अतोऽहं ब्रवीमि—'स्वर्णरेखामहं स्पृष्ट्वा' इत्यादि । ततस्स्वयंकृतोऽयं दोषः । अत्र विलपनमप्यनुचितम् । (क्षणं विमृश्य ।) मित्र, यथाऽनयोः सौहार्दं मया कारितं, तथा मित्रभेदोऽपि मया कार्यः । यतः ।

अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः ।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥ १२१ ॥

अपरं च ।

उत्पन्नेष्वपि कार्येषु मतिर्यस्य न हीयते ।
5 स निस्तरति दुर्गाणि गोपी जारद्वयं यथा ॥ १२२ ॥

दमनकः पृच्छति—'कथमेतत् ?' स कथयति—

कथा ६ ।

अस्ति द्वारवत्यां पुर्यां कस्यचिद्गोपस्य वधूर्बन्धकी । सा ग्रामस्य दण्डनायकेन तत्पुत्रेण च समं रमते । तथा चोक्तम्—

10 नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ १२३ ॥

अन्यच्च ।

न दानेन न मानेन नार्जवेन न सेवया ।
न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः ॥ १२४ ॥

15 यतः ।

गुणाश्रयं कीर्तियुतं च कान्तं
पतिं विधेयं सधनं रतिज्ञं ।
विहाय शीघ्रं वनिता व्रजन्ति
नराधमं शीलगुणादिहीनम् ॥ १२५ ॥

20 अपरं च ।

न तादृशी प्रीतिमुपैति नारी
विचित्रशय्याशयिताऽपि कामम् ।

यथा हि दूर्वादिविकीर्णभूमौ
प्रयाति सौख्यं परकान्तसङ्गात् ॥ १२६ ॥

अथ सा कदाचिद्दण्डनायकसुतेन सह रममाणा तिष्ठति । अथ दण्डनायकमायान्तं दृष्ट्वा तत्पुत्रं कुसूले निःक्षिप्य, दण्डनायकेन समं तथैवाक्रीडत् । अनन्तरं तस्या भर्ता गोपो गोष्ठात्समागतः । तमालोक्य गोप्योक्तम्—'दण्डनायक, त्वं लगुडं गृहीत्वा कोपं दर्शयन् सत्वरं याहि । तथा कृते गोपेनागत्य पत्नी पृष्टा 'केन कार्येणात्र दण्डनायकः सकोपः समागतः ?' सा ब्रूते—'अयं केनापि कारणेन पुत्रस्योपरि क्रुद्धः । स च पलायमानोऽत्रागत्य प्रविष्टः । मया कुसूले निःक्षिप्य रक्षितः । पित्रा चान्विष्यात्र गृहे न दृष्टः । अतोऽयं कुपित एव गच्छति ' ततः सा तत्पुत्रं कुसूलादवतार्य दर्शितवती । तथा चोक्तम्—

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥ १२७ ॥

अतोऽहं ब्रवीमि—'उत्पन्नेष्वपि कार्येषु' इत्यादि ॥

करटको ब्रूते—'अस्त्वेवम् । किंत्वनयोर्महान्निसर्गस्नेहः कथं भेदयितुं शक्यः ?' दमनक आह—'उपायश्चिन्तनीयः । तथा चोक्तम्—

उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।
काकी कनकसूत्रेण कृष्णसर्पमघातयत् ॥ १२८ ॥

करटकः पृच्छति—'कथमेतत् ?' दमनकः कथयति—

## कथा ७।

कस्मिंश्चित्तरौ वायसदंपती निवसतः। तयोरपत्यानि तत्तरु-कोटरेऽवस्थितेन कृष्णसर्पेण खादितानि। ततः पुनर्गर्भवती वायसी वायसं ब्रूते—'स्वामिन्, त्यज्यतामयं तरुः। अत्रैव तस्मात्कृष्णसर्पादावयोः कदाचिदपि प्रजावृद्धिर्न भविष्यति। यतः।

दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः।
ससर्पे च गृहे वासो मृत्युरेव न संशयः' ॥ १२९ ॥

वायसो ब्रूते—'प्रिये न भेतव्यम्। वारंवारं मयैतस्य महापराधः सोढः। इदानीं पुनर्न क्षन्तव्यः।' वायस्याह—कथमनेन बल-वता सार्धं भवान् विग्रहीतुं समर्थः?' वायसो ब्रूते—'अलमनया शङ्कया। यतः।

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
यस्य सिंहो मदोन्मत्तः शशकेन निपातितः' ॥ १३० ॥

वायस्याह—'कथमेतत्?' वायसः कथयति—

### ॥ अवान्तर कथा १ ॥

अस्ति मन्दरनाम्नि पर्वते दुर्दान्तो नाम सिंहः। स च सर्वदा पशूनां वधं कुर्वन्नास्ते। ततः सर्वैः पशुभिर्मिलित्वा स सिंहो विज्ञप्तः—'किमर्थं सर्वपशुवधः क्रियते? वयमेव भवदा-हारार्थं प्रत्यहमेकैकं पशुं दास्यामः?' सिंहेनोक्तम्—'एवमस्तु'। ततः प्रभृत्येकैकं पशुमुपकल्पितं भक्षयन्नास्ते। अथ कदाचिद्वृद्ध-शशकस्य वारः समायातः। सोऽचिन्तयत्—

'त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया ।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे ॥ १३१ ॥

तन्मन्दं मन्दमुपगच्छामि ।' ततः सिंहोऽपि क्षुधापीडितः को-
पात्तमुवाच—'किमागमे विलम्बकारणम्?' सोऽब्रवीत्—'नाह-
मपराधी । अपि तु सिंहान्तरेणावलोकितो बलाद्धृतः । पुनराग- 5
मनाय शपथं कृत्वा, स्वामिने तन्निवेदयितुमत्रागतोऽस्मि ।' सिंहः
सकोपमाह—'सत्वरं गत्वा दर्शय । क्वासौ दुरात्मा तिष्ठति?'
ततः शशकस्तं गृहीत्वा गम्भीरकूपसमीपं गतः । 'अत्रागत्य
पश्यतु स्वामी' इत्युक्त्वा कूपान्तर्जले तस्यैव सिंहस्य प्रतिबिम्बं
दर्शितवान् । ततोऽसौ दर्पाध्मातः कोपात् तस्योपरि पपात । 10
ऊर्ध्वपादोऽधःशिरास्तज्जले मग्नः पञ्चत्वमगमत् । अतोऽहं
ब्रवीमि 'बुद्धिर्यस्य' इत्यादि ॥

वायस्याह—'सर्वं श्रुतं । संप्रति यथा कर्तव्यं तदुपदिश्य-
ताम् ।' वायसोऽवदत्—'अत्रासन्ने सरसि राजपुत्रः सततमागत्य
स्नाति । स्नानसमये तदङ्गादवतारितं तीर्थशिलानिहितं कनकसूत्रं 15
चञ्च्वा विधृत्यानीयास्मिन्कोटरे पातय' इति । अथ कदाचित् स्नातुं
जलं प्रविष्टे राजपुत्रे वायस्या तदनुष्ठितम् ।' अथ कनकसूत्रानु-
सरणप्रवृत्तै राजपुरुषैस्तत्र तरुकोटरे कृष्णसर्पो दृष्टो व्यापादि-
तश्च । अतोऽहं ब्रवीमि—'उपायेन हि यच्छक्यम्' इत्यादि ॥

करटक आह—'यद्येवं तदा गच्छ । शिवास्सन्तु ते 20
पन्थानः ।' ततो दमनकः पिङ्गलकसमीपं गत्वा प्रणम्योवाच—
'देव, आत्ययिकं किमप्यकुशलं मन्यमानः समागतोऽस्मि ।
यतः ।

आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः ॥ १३२ ॥

अन्यच्च ।

भोगस्य भाजनं राजा न राजा कार्यभाजनम् ।
5 राजकार्यपरिध्वंसी मन्त्री दोषेण लिप्यते ॥ १३३ ॥

तथा हि । पश्यामात्यानामेष क्रमः ।

वरं प्राणपरित्यागः शिरसो वापि कर्तनम् ।
न तु स्वामिपदावाप्तिः पातकेच्छोरुपेक्षणम्' ॥ १३४ ॥

पिङ्गलकः सादरं ब्रूते—अत्रभवान् किं वक्तुमिच्छति ?'
10 दमनक आह—'अयं तावत्संजीवकस्तवोपर्यसदृशव्यवहारी तथा चास्मत्सान्निधाने श्रीमद्देवपादानां शक्तित्रयनिन्दां कृत्वा राज्यमेवाभिलषति ।' एतच्छ्रुत्वा पिङ्गलकः साश्चर्यं तूष्णीं स्थितः । दमनकः पुनराह—'देव, सर्वामात्यपरित्यागं कृत्वा एक एवायं सकलकार्याधिकारी कृतः । अयं च महान् दोषः । यतः ।

15 अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ १३५ ॥

अपरं च ।

20 एकं भूमिपतिः करोति सचिवं राज्यप्रदानं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते ।
निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति ॥

तथा चोक्तम्—

विरक्तस्य च भक्तस्य दन्तस्य गलितस्य च ।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं वरम् ॥ १३७ ॥

किं च ।

यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति । 5
सोऽन्धवज्जगतीपालः सीदेत्संचारकैर्विना ॥ १३८ ॥

विशेषतश्च ।

सदाऽमात्यो न साध्यः स्यात्
समृद्धः सर्व एव हि ।
सिद्धानामयमादेश 10
ऋद्धिश्चित्तविकारिणी ॥ १३९ ॥

स च सर्वकार्ये स्वेच्छातः प्रवर्तते । तदत्र प्रमाणं स्वामी जानाति ।

न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम् ।
परस्य युवतीं भार्यां साकाङ्क्षं नेक्षते च कः' ॥१४०॥

सिंहो विमृश्याह—'भद्र, यद्यप्येवं तथाऽपि संजीवकेन सह मम 15
महान् स्नेहः । पश्य ।

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः ।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥ १४१ ॥

अन्यच्च ।

अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः । 20
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः' ॥ १४२ ॥

दमनकः पुनराह—'देव, स एवातिदोषः । यतः ।

यस्मिन्नेवाधिकं चक्षुरारोहयति पार्थिवः ।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्याश्रीयते जनः ॥१४३॥

शृणु देव,

अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।
5 वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥ १४४ ॥

त्वया च मूलभृत्यानपास्यायमागन्तुकः पुरस्कृतः । एतच्चानुचितं कृतम् ।

मूलभृत्यान् परित्यज्य नागन्तून् प्रतिमानयेत् ।
नातः परतरो दोषो राज्यभेदकरो यतः ' ॥ १४५ ॥

10 सिंहो ब्रूते—'किमाश्चर्यम् । मयाऽयमभयवाचं दत्त्वा नीतः संवर्धितश्च । तत्कथं मह्यं द्रुह्यति ?' दमनको वदति—'देव,

दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ १४६ ॥

15 अपरं च ।

स्वेदितो मर्दितश्चैव रज्जुभिः परिवेष्टितः ।
युक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः ॥ १४७ ॥

अन्यच्च ।

वर्धनं वाथ सम्मानं खलानां प्रीतये कुतः ।
20 फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥ १४८ ॥

अतोऽहं ब्रवीमि—

'अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत् पराभवम् ।
एष एव सतां धर्मो विपरीतमतोऽन्यथा ' ॥ १४९ ॥

तथा चोक्तम्—

स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
सा स्त्री याऽनुविधायिनी स मतिमान्यः सद्भिरभ्यर्च्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते
तन्मित्रं यदकृत्रिमं स पुरुषो यः खिद्यते नेन्द्रियैः ॥१५०॥ 5

यदि संजीवकव्यसनार्दितो विज्ञापितोऽपि स्वामी न निवर्तते, तदा न भृत्ये दोषः । तथा च ।

नृपः कामासक्तो न गणयति कार्यं न च हितं
यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव ।
ततो मानाध्मातः स पतति यदा शोकगहने 10
तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्यविनयम् ॥१५१॥

पिङ्गलकः—(स्वगतम् ।)

'न परस्यापराधेन परेषां दण्डमाचरेत् ।
आत्मनाऽवगमं कृत्वा बध्नीयात् पूजयेच्च वा ॥१५२॥

तथा चोक्तम् । 15

गुणदोषावनिश्चित्य कुर्यान्न ग्रहनिग्रहौ ।
स्वनाशाय यथा न्यस्तो दर्पात् सर्पमुखे करः ॥ १५३ ॥

प्रकाशं ब्रूते—'तदा संजीवकः किं प्रत्यादिश्यताम् ?'
दमनकः ससंभ्रममाह—'देव, मैवम् । एतावता मन्त्रभेदो जायते । तथा चोक्तम्— 20

मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा ।
मनागपि न भिद्येत तद्भिन्नं न प्ररोहति ॥ १५४ ॥

किं च ।

आदेयस्य प्रदेयस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ १५५ ॥

तदवश्यं समारब्धं महता प्रयत्नेन संपादनीयम् । किं च ।

5 मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि ।
चिरं न सहते स्थातुं परेभ्यो भेदशङ्कया ॥ १५६ ॥

यद्यसौ दृष्टदोषोऽपि दोषान्निवर्त्य संधातव्यस्तदतीवानुचितम् । यतः ।

सकृद्दुष्टं तु यो मित्रं पुनस्संधातुमिच्छति ।
10 स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ १५७ ॥

सिंहो ब्रूते—'ज्ञायतां तावत्, किमयमस्माकं कर्तुं समर्थः'? दमनक आह—'देव,

अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः ।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः' ॥ १५८ ॥

15 सिंहः पृच्छति...'कथमेतत्?' दमनकः कथयति—

## कथा ८ ।

दक्षिणसमुद्रतीरे टिट्टिभदंपती निवसतः । ततष्टिट्टिभी चासन्नप्रसवा भर्तारमाह—'नाथ, प्रसवयोग्यस्थानं निभृतमनुसंधीयताम् ।' टिट्टिभोऽवदत्—नन्विदमेव स्थानं प्रसूतियोग्यम् । 20 साऽऽह 'समुद्रवेलया स्थानमिदं व्याप्यते ।' सोऽब्रवीत्—'भद्रे, किमहं निर्बलः? मम गृहावस्थितान्यण्डानि किं समुद्रेणापहर्तव्यानि?' । टिट्टिभी विहस्याह—'नाथ, तव समुद्रस्य च महदन्तरम् । अथवा—

परापरं परिच्छेत्तुं योग्यायोग्यं च वेत्ति यः ।
अस्तीह यस्य विज्ञानं स कृच्छ्रेऽपि न सीदति ॥१५९॥

अपि च ।

अनुचितकार्यारम्भः स्वजनविरोधो बलीयसा स्पर्धा ।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि ॥ १६० ॥ 5

ततः कृच्छ्रेण स्वामिवचनात्सा तत्रैव प्रसूता । एतत्सर्वं श्रुत्वा समुद्रेण तच्छक्तिजिज्ञासार्थं तदण्डान्यपहृतानि । अथ टिट्टिभी शोकार्ता भर्तारमाह—'नाथ, कष्टमापतितं । तान्यण्डानि मेऽपहृतानि ।' टिट्टिभः—'प्रिये, मा भैषीः ।' इत्युक्त्वा पक्षिणां मेलनं कृत्वा पक्षिस्वामिनो गरुडस्य समीपं गतः । तत्र गत्वा 10 सकलवृत्तान्तं टिट्टिभेन भगवतो गरुडस्य पुरतो निवेदितम्—'देव, समुद्रेणाहं स्वगृहावस्थितो विनाऽपराधेनैव निगृहीतः ।' तद्वचनमाकर्ण्य गरुत्मता प्रभुर्भगवान्नारायणः सृष्टिस्थितिप्रलयहेतुर्विज्ञप्तः, समुद्रमण्डदानायादिदेश । ततो भगवदाज्ञां मौलौ विधाय समुद्रेण तान्यण्डानि टिट्टिभाय समर्पितानि । अतोऽहं 15 ब्रवीमि—'अङ्गाङ्गिभावमज्ञात्वा' इत्यादि ॥

शास्त्रातिक्रमज्ञात्वा वैरमारभते द्विपः ।
स पराभवमाप्नोति समुद्र इव टिट्टिभात् ॥ १६१ ॥

राजाह—'कथमसौ ज्ञातव्यो द्रोहबुद्धिरिति'। दमनकः पुनराह—'यदाऽसौ सदर्पः शृङ्गाग्रप्रहरणाभिमुखश्चकितमिवागच्छति, 20 तदा ज्ञास्यति स्वामी ।' एवमुक्त्वा संजीवकसमीपं गतः मन्दमन्दमुपसर्पन् विस्मितमिवात्मानमदर्शयत् । संजीवकेन सादर-

मुक्तम्—'भद्र, कुशलं ते?' दमनको ब्रूते—'अनुजीविनां कुतः कुशलम्? यतः।

संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम्।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः॥ १६२॥

5 अन्यच्च।

कोऽर्थान् प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः
स्त्रीभिः कस्य न खण्डितं भुवि मनः को वास्ति राज्ञां प्रियः।
कः कालस्य भुजान्तरं न च गतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्'॥१६३॥

10 संजीवकेनोक्तम्—'सखे, ब्रूहि, किमेतत्?' दमनक आह—'किं ब्रवीमि मन्दभाग्यः। पश्य।

मज्जन्नपि पयोराशौ लब्ध्वा सर्पावलम्बनम्।
न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि संप्रति॥ १६४॥

यतः।

15 एकत्र राजविश्वासो नश्यत्यन्यत्र बान्धवः।
किं करोमि क्व गच्छामि पतितो दुःखसागरे'॥ १६५॥

इत्युक्त्वा दीर्घं निश्वस्योपविष्टः। संजीवको ब्रूते—'मित्र, तथाऽपि सविस्तरं मनोगतमुच्यताम्।' दमनकस्सुनिभृतमाह—यद्यपि राजविश्वासो न कथनीयस्तथाऽपि भवानस्मदीयप्रत्ययादागतः। मया परलोकार्थिनाऽवश्यं तव हितमाख्येयम्। शृणु। अयं स्वामी तवोपरि विकृतबुद्धी रहस्युक्तवान् 'संजीवकमेव हत्वा स्वपरिवारं तर्पयामि' इति॥ एतच्छ्रुत्वा संजीवकः परं

विषादमगमत् । दमनकः पुनराह—'अलं विषादेन । प्राप्तकालं कार्यमनुष्ठीयताम् ।' संजीवकः क्षणं विमृश्याह—(स्वगतम्) सुष्ठु खल्विदमुच्यते ।

दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा ।
कृपणानुसारि च धनं देवो गिरिजलधिवर्षी च ॥ १६६ ॥ 5

तथा ।

नीचमाश्रयते लक्ष्मीरकुलीनं सरस्वती ।
अपात्रं भजते नारी गिरौ वर्षति वासवः ॥ १६७ ॥

किं वा दुर्जनचेष्टितं न वेद्म्येतद्व्यवहारान्निर्णेतुं न शक्यते। यतः ।

कश्चिदाश्रयसौन्दर्याद्धत्ते शोभामसज्जनः । 10
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम् ॥ १६८ ॥

(विचिन्त्य, प्रकाशम्) कष्टं किमिदमापतितम् । यतः ।

आराध्यमानो नृपतिः प्रयत्ना-
न्न तोषमायाति किमत्र चित्रम् ।
अयं त्वपूर्वप्रतिमाविशेषो 15
यस्सेव्यमानो रिपुतामुपैति ॥ १६९ ॥

तदयमशक्यार्थः प्रमेयः । यतः ।

निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति ।
अकारणद्वेषि मनस्तु यस्य 20
कथं जनस्तं परितोषयिष्यति ॥ १७० ॥

किं मयाऽपकृतं राज्ञः ? अथवा निमित्तापकारिणश्च भवन्ति राजानः ।' दमनको ब्रूते—'एवमेतत् । शृणु ।

विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चि-
त्साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति ।
चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥ १७१ ॥

5 अन्यच्च ।

कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु ।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥ १७२ ॥

किं च ।

चन्दनतरुषु भुजंगा जलेषु कमलानि तत्र च ग्राहाः ।
10 गुणघातिनश्च भोगे खला न च सुखान्यविघ्नानि ॥१७३॥

अन्यच्च ।

मूलं भुजंगैः कुसुमं च भृङ्गैः
शाखाः प्लवङ्गैः शिखरं विहङ्गैः ।
नास्त्येव तच्चन्दनपादपस्य
15 यन्नाश्रितं दुष्टतरैश्च हिंस्रैः' ॥ १७४ ॥

दमनको ब्रूते—'अयं तावत्स्वामी वाचि मधुरो विषहृदयो ज्ञातः । यतः ।

दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथाप्रश्नेषु दत्तादरः ।
20 अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः' ॥ १७५ ॥

तथा हि ।

पोतो दुस्तरवारिराशितरणे दीपोऽन्धकारागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥१७६॥ 5

संजीवकः (पुनर्निःश्वस्य)—'कष्टं भोः। कथमहं सस्यभक्षकः सिंहेन निपातयितव्यः ।

ययोरेव समं वित्तं ययोरेव समं बलम् ।
तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ १७७ ॥

(पुनर्विचिन्त्य ।) केनायं राजा ममोपरि विकारितो न जाने । 10
भेदमुपगताद्राज्ञस्सदा भेतव्यम् । यतः ।

मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् ।
वलयं स्फटिकस्येव को हि संधातुमीश्वरः ॥ १७८ ॥

अन्यच्च ।

वज्रं च राजतेजश्च द्वयमेवातिभीषणम् । 15
एकमेकत्र पतति पतत्यन्यत् समन्ततः ॥ १७९ ॥

ततः संग्रामे मृत्युरेव वरम् । इदानीं तदाज्ञानुवर्तनमयुक्तम्। यतः।

मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा ।
उभावपि हि शूराणां गुणावेतौ सुदुर्लभौ ॥ १८० ॥

युद्धकालश्चायम् । 20

यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः ।
तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥१८१॥

यतः ।

अयुद्धे हि यदा पश्येन्न किंचिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥ १८२ ॥
जये च लभते लक्ष्मीं मृतावपि सुराङ्गनाम् ।
क्षणविध्वंसिनः कायाः का चिन्ता मरणे रणे' ॥१८३॥

एतच्चिन्तयित्वा संजीवक आह—'भो मित्र, कथमसौ मां जिघांसुर्ज्ञातव्यः ?' दमनको ब्रूते—'यदासौ पिङ्गलकः समुन्नतलाङ्गूल उन्नतचरणो विवृतास्यस्त्वां पश्यति, तदा त्वमेव स्वविक्रमं दर्शयिष्यसि । यतः ।

10 बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ।
निश्शङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ १८४ ॥

किंतु सर्वमेतत्सुगुप्तमनुष्ठातव्यम् । नो चेन्न त्वं, नाहम् ।'

इत्युक्त्वा दमनकः करटकसमीपं गतः । करटकेनोक्तम्—'किं निष्पन्नम् ?' दमनकेनोक्तम्—'निष्पन्नोऽसावन्योन्यभेदः ।'
15 करटको ब्रूते—'कोऽत्र संदेहः ? यतः ।

बन्धुः को नाम दुष्टानां कुप्यते को न याचितः ।
को न तृप्यति वित्तेन कुकृत्ये को न पण्डितः ॥१८५॥

अन्यच्च ।

दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये ।
20 किन्नाम खलसंसर्गः कुरुते नाश्रयाशवत्' ॥ १८६ ॥

ततो दमनकः पिङ्गलकसमीपं गत्वा 'देव, समागतोऽसौ पापाशयः । ततः सज्जीभूय स्थीयताम्' इत्युक्त्वा पूर्वोक्ताकारं कार-

यामास । संजीवकोऽप्यागत्य तथाविधं विकृताकारं सिंहं दृष्ट्वा, स्वानुरूपं विक्रमं चकार । ततस्तयोर्युद्धे संजीवकस्सिंहेन व्यापादितः । अथ संजीवकं सेवकं पिङ्गलको व्यापाद्य विश्रान्तः सशोक इव तिष्ठति । ब्रूते च—'किं मया दारुणं कर्म कृतम् ?। यतः । 5

परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम् ।
धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १८७ ॥

अपरं च ।

भूम्येकदेशस्य गुणान्वितस्य
भृत्यस्य वा बुद्धिमतः प्रणाशः । 10
भृत्यप्रणाशे मरणं नृपाणां
नष्टापि भूमिः सुलभा न भृत्याः' ॥ १८८ ॥

दमनको ब्रूते—'स्वामिन्, कोऽयं नूतनो न्यायः, यदरातिं हत्वा संतापः क्रियते ? तथा चोक्तम्—

पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत् । 15
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥ १८९ ॥

अपि च ।

धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत् ।
नहि हस्तस्थमप्यन्नं क्षमावान् भक्षितुं क्षमः ॥ १९० ॥

किं च । 20

क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम् ।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥ १९१ ॥

अपरं च ।

राज्यलोभादहंकारादिच्छतः स्वामिनः पदम् ।
प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥ १९२ ॥

अन्यच्च ।

राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः ।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या अमी यश्च कृतं न वेत्ति ॥ १९३ ॥

विशेषतश्च ।

सत्याऽनृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या ।
नित्यव्यया प्रचुरनित्यधनागमा च
वाराङ्गनेव नृपनीतिरनेकरूपा ॥ १९४ ॥

इति दमनकेन संतोषितः पिङ्गलकः स्वां प्रकृतिमापन्नः सिंहासने समुपविष्टः । दमनकः प्रहृष्टमनाः 'विजयतां महाराजः । शुभमस्तु सर्वजगताम्' इत्युक्त्वा यथासुखमवस्थितः ॥

विष्णुशर्मोवाच—'सुहृद्भेदः श्रुतस्तावद्भवद्भिः ।' राजपुत्रा ऊचुः—'भवत्प्रसादाच्छृण्वन्तः सुखिनो भूता वयम् ।' विष्णुशर्माऽब्रवीत्—'अपरमपीदमस्तु—

सुहृद्भेदस्तावद्भवतु भवतां शत्रुनिलये
खलः कालाकृष्टः प्रलयमुपसर्पत्वहरहः ।
जनो नित्यं भूयात् सकलसुखसंपत्तिवसतिः
कथारम्भे रम्ये सततमिह बालोऽपि रमताम्' ॥ १९५ ॥

इति हितोपदेशे सुहृद्भेदो नाम द्वितीयः कथासंग्रहः समाप्तः ॥

# विग्रहः ।

पुनः कथारम्भकाले राजपुत्रा ऊचुः—'आर्य, राजपुत्रा वयम् । तद्विग्रहं श्रोतुं नः कुतूहलमस्ति ।' विष्णुशर्मणोक्तम्—'यदेव भवद्भ्यो रोचते तत्कथयामि । श्रूयतां विग्रहो यस्यायमाद्यः श्लोकः— 5

हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे ।
विश्वास्य विजिता हंसाः काकैः स्थित्वाऽरिमन्दिरे' ॥१॥

राजपुत्रा ऊचुः—'कथमेतत् ?' विष्णुशर्मा कथयति—

'अस्ति कर्पूरद्वीपे पद्मकेलिनामधेयं सरः । तत्र हिरण्यगर्भो नाम राजहंसः प्रतिवसति । स च सर्वैर्जलपक्षिभिर्मिलित्वा पक्षि- 10 राज्येऽभिषिक्तः । यतः ।

यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा ।
अकर्णधारा जलधौ विप्लवेतेह नौरिव ॥ २ ॥

अपरं च ।

प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम् । 15
वर्धनाद्रक्षणं श्रेयस्तदभावे सदप्यसत् ॥ ३ ॥

एकदासौ राजहंसः सुविस्तीर्णकमलपर्यङ्के सुखासीनः परिवारपरिवृतस्तिष्ठति । ततः कुतश्चिद्देशादागत्य दीर्घमुखो नाम बकः प्रणम्योपविष्टः । राजोवाच—'दीर्घमुख, देशान्तरादागतोऽसि । वार्तां कथय ।' स ब्रूते—'देव, अस्ति महती वार्ता । तां वक्तुं 20 सत्वरमागतोऽहम् । श्रूयताम् । अस्ति जम्बूद्वीपे विन्ध्यो नाम

गिरिः। तत्र चित्रवर्णो नाम मयूरः पक्षिराजो निवसति। तस्यानुचरैश्चरद्भिः पक्षिभिरहं दग्धारण्यमध्ये चरन्नवलोकितः पृष्टश्च—'कस्त्वम्? कुतः समागतोऽसि?' इति। तदा मयोक्तम्—'कर्पूरद्वीपस्य राजचक्रवर्तिनो हिरण्यगर्भस्य राजहंसस्यानुचरोऽहम्।
5 कौतुकाद्देशान्तरं द्रष्टुमागतोऽस्मि।' इति। एतच्छ्रुत्वा पक्षिभिरुक्तम्—'अनयोर्देशयोः को देशो भद्रतरः? राजा च?' मयोक्तम्—'आः, किमेवमुच्यते? महदन्तरम्। यतः कर्पूरद्वीपः स्वर्ग एव द्वितीयः। राजहंसश्च द्वितीयः स्वर्गपतिः। अत्र मरुस्थले पतिता यूयं किं कुरुथ? अस्मद्देशे गम्यताम्।' ततोऽस्मद्वचन-
10 माकर्ण्य सर्वे सकोपा बभूवुः। तथा चोक्तम्—

पयःपानं भुजंगानां केवलं विषवर्धनम्।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये॥ ४॥

अन्यच्च।

विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन।
15 वानरानुपदिश्याथ स्थानभ्रष्टा ययुः खगाः'॥ ५॥

राजोवाच—'कथमेतत्?' दीर्घमुखः कथयति—

## कथा १।

अस्ति नर्मदातीरे विशालः शाल्मलीतरुः। तत्र निर्मितेषु नीडक्रोडेषु पक्षिणो निवसन्ति सुखेन वर्षासु। अथ नीलपटलै-
20 रावृते नभस्तले धारासारैर्महती वृष्टिर्बभूव। ततो वानरांश्च तरुतलेऽवस्थितान् शीताकुलान् कम्पमानानवलोक्य कृपया पक्षिभिरुक्तम्—'भो भो वानराः, शृणुत।

अस्माभिर्निर्मिता नीडाश्चञ्चुमात्राहृतैस्तृणैः ।
हस्तपादादिसंयुक्ता यूयं किमिति सीदथ ?' ॥ ६ ॥

तच्छ्रुत्वा वानरैर्जातरोषैरालोचितम्—'अहो निर्वातनीडगर्भावस्थिताः सुखिनः पक्षिणोऽस्मान् निन्दन्ति । भवतु तावद्वृष्टेरुपशमः । अनन्तरमेकेन वानरेणोक्तम्—

'सूचीमुखा दुराचारा मूर्खाः पण्डितमानिनः ।
अशक्ता गृहनिर्माणे शक्ताश्च गृहभञ्जने' ॥ ७ ॥

अनन्तरं शान्ते पानीयवर्षे तैर्वानरैः वृक्षमारुह्य सर्वे नीडा भग्नाः । तेषामण्डानि चाधः पातितानि । अतोऽहं ब्रवीमि—'विदुषैवोपदेष्टव्य' इत्यादि ॥

राजोवाच—'ततस्तैः किं कृतम् ?' बकः कथयति—ततस्तैः कोपादुक्तम्—'केनासौ राजहंसो राजा कृतः ?' ततो मयोपजातकोपेनोक्तम्—'युष्मदीयो मयूरः केन राजा कृतः ?' एतच्छ्रुत्वा ते सर्वे मां हन्तुमुद्यताः । ततो मयाऽपि स्वविक्रमो दर्शितः । यतः ।

अन्यदा भूषणं पुंसां क्षमा लज्जेव योषिताम् ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव' ॥ ८ ॥

राजा विहस्याह—

'आत्मनश्च परेषां च यः समीक्ष्य बलाबलम् ।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः ॥ ९ ॥

अन्यच्च ।

सुचिरं हि चरन्नित्यं क्षेत्रे सस्यमबुद्धिमान् ।
द्वीपिचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः' ॥ १० ॥

बकः पृच्छति—कथमेतत् ?' राजा कथयति—

## कथा २।

अस्ति हस्तिनापुरे विलासो नाम रजकः। तस्य गर्दभोऽतिभार-
वाहनाद्दुर्बलो मुमूर्षुरिवाभवत्। ततस्तेन रजकेनासौ व्याघ्रचर्मणा
प्रच्छाद्यारण्यसमीपे सस्यक्षेत्रे नियुक्तः। ततो दूरादवलोक्य
5 व्याघ्रबुद्ध्या क्षेत्रपतयः सत्वरं पलायन्ते। गर्दभस्तत्सस्यभक्षणा-
द्दिनेदिने पुष्टाङ्गोऽभवत्। अथ केनापि सस्यरक्षकेण धूसरकम्बल-
कृततनुत्राणेन धनुःकाण्डं सज्जीकृत्यैकान्ते स्थितम्। तं च दूरा-
द्दृष्ट्वा गर्दभः शब्दं कुर्वाणस्तदभिमुखं प्रधावितः। सस्यरक्षकेण
गर्दभोऽयमिति ज्ञात्वा लीलयैव व्यापादितः। अतोऽहं ब्रवीमि—
10 सुचिरं हि चरन्नित्यम्' इत्यादि॥

दीर्घमुखो ब्रूते—'ततः पक्षिभिरुक्तम्—'अरे पाप दुष्ट
बक, अस्माकं भूमौ चरन्नस्मत्स्वामिनमधिक्षिपसि? तन्न क्षन्तव्य-
मिदानीम्' इत्युक्त्वा सर्वे मां चञ्चुभिर्हत्वा सकोपा ऊचुः—
'पश्य रे मूर्ख, स हंसस्तव राजा सर्वथा मृदुः। तस्य राज्याधि-
15 कारो नास्ति। यतः। एकान्तमृदुः करतलस्थमप्यर्थं रक्षितुमक्ष-
मः। स कथं पृथिवीं शास्ति? राज्यं वा तस्य किम्? किंतु त्वं
कूपमण्डूकसमः। तेन तदाश्रयमुपदिशसि। शृणु।

सेवितव्यो महान् वृक्षः फलच्छायासमन्वितः।
यदि दैवात् फलं नास्ति च्छाया केन निवार्यते॥ ११॥

20 अन्यच्च

हीनाश्रयो न कर्तव्यः कर्तव्यो महदाश्रयः।
पयोऽपि शौण्डिनीहस्ते वारुणीत्यभिधीयते॥ १२॥

अपरं च ।

न स्थातव्यं न गन्तव्यं क्षणमप्यसता सह ।
असतां सङ्गमो मृत्युः सतां सङ्गो हि भेषजम् ॥ १३ ॥

अन्यच्च ।

महानप्यल्पतां याति निर्गुणे गुणविस्तरः । 5
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ १४ ॥

विशेषतश्च ।

व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे ।
शशिनो व्यपदेशेन शशकाः सुखमासते' ॥ १५ ॥

मयोक्तम्—'कथमेतत्?' पक्षिणः कथयन्ति— 10

## कथा ३ ।

कदाचिद्वर्षास्वपि वृष्टेरभावात् तृषार्तो गजयूथो यूथपतिमाह—'नाथ, कोऽभ्युपायोऽस्माकं जीवनाय? नास्ति क्षुद्रजन्तूनां निमज्जनस्थानम् । वयं च निमज्जनाभावादन्धा इव । क्व यामः? किं वा कुर्मः? ततो हस्तिराजो नातिदूरं गत्वा निर्मलं 15 ह्रदं दर्शितवान् । अनन्तरं तत्तीरावस्थिताः शशका गजयूथपदाहतिभिश्चूर्णिता बभूवुः । अनन्तरं शिलीमुखो नाम शशकश्चिन्तयामास—'अनेन गजयूथेन पिपासाकुलितेन प्रत्यहमत्रागन्तव्यम् । अतो विनष्टमस्मत्कुलम्' । ततो विजयो नाम वृद्धशशकोऽवदत्—'मा विषीदत । मयाऽत्र प्रतीकारः कर्तव्यः ।' 20 इति प्रतिज्ञाय चलितः । गच्छता च तेनालोचितम्—कथं मया गजयूथनिकटे स्थित्वा कर्तव्यम् । यतः ।

स्पृशन्नपि गजो हन्ति घ्राणेनापि भुजंगमः ।
पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः ॥ १६ ॥

अथाहं पर्वतशिखरमारुह्य यूथनाथं निवेदयामि ।' तथाऽनुष्ठिते यूथनाथ उवाच—'कस्त्वम्? कुतः समायातः?' इति । स ब्रूते—
5 'दूतोऽहं, भगवता चन्द्रेण प्रेषितः ।' यूथपतिराह—'कार्यमुच्यताम् ।' विजयो वदति—

उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ १७ ॥

तदहं तदाज्ञया ब्रवीमि । शृणु । 'यदेते शशकाश्चन्द्रसरोरक्षका-
10 स्त्वया निस्सारितास्तन्न भद्रं कृतं । यतोऽस्मद्रक्षिताः । अत एव मम शशीति प्रसिद्धिः ।' एवमुक्तवति दूते यूथपतिर्भयादिद-माह—'इदमज्ञानतः कृतम् । पुनर्नागमिष्यामि ।' दूत उवाच—'तदत्र सरसि भगवन्तं चन्द्रमसं कोपात् प्रकम्पमानं प्रणम्य प्रसाद्य च गच्छ ।' ततस्तेन रात्रौ नीत्वा तत्र सरसिजले चञ्चलं
15 चन्द्रप्रतिबिम्बं दर्शयित्वा यूथपतिः प्रणामं कारितः । देवाज्ञाना-दनेन कृतं क्षम्यताम् ।' इत्युक्त्वा तेन शशकेन स यूथपतिः प्रस्थापितश्च । अतोऽहं ब्रवीमि—'व्यपदेशेऽपि सिद्धिः स्यात्' इत्यादि ॥

ततो मयोक्तम्—'स एवास्मत्प्रभुर्महाप्रतापोऽतिसमर्थस्त्रै-
20 लोक्यस्याऽपि प्रभुत्वं तत्र युज्यते ।' अथाहं तैः पक्षिभिर्बद्ध्वा कथमस्मद्भूमौ चरसि' इत्यभिधाय चित्रवर्णस्य राज्ञः समीपं नीतः । ततो राज्ञः पुरतो मामुद्दिश्य तैः प्रणम्योक्तम्—'देवा-वधीयताम्, एष दुष्टबकोऽस्मद्देशे चरन्नपि देवपादानधिक्षिपति ।'

राजाह—'कोऽयम्? कुतः समायातः?' त ऊचुः—'हिरण्यगर्भस्य राजहंसस्यानुचरः कर्पूरद्वीपादागतः।' अथाहं गृध्रेण मन्त्रिणा पृष्टः—'कस्तत्र मुख्यो मन्त्री?' इति मयोक्तम्—सर्वशास्त्रार्थपारगः सर्वज्ञो नाम चक्रवाकः।' गृध्रो ब्रूते—'युज्यते। स्वदेशजोऽसौ। यतः। 5

स्वदेशजं कुलाचारे विशुद्धमुपधाशुचिम्।
शास्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम्॥ १८॥
अधीतव्यवहारार्थं ख्यातं मौलं विपश्चितम्।
अर्थस्योत्पादकं सम्यङ्निदध्यान्मन्त्रिणं नृपः॥ १९॥

अत्रान्तरे शुकेनोक्तम्—'देव, कर्पूरद्वीपादयो लघुद्वीपा जम्बूद्वीपान्तर्गता एव। तत्रापि देवपादानामाधिपत्यम्।' ततो राज्ञाप्युक्तम्—'एवमेव। यतः। 10

राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः।
अप्राप्यमभिवाञ्छन्ति किं पुनर्लभ्यतेऽपि यत्॥ २०॥

ततो मयोक्तम्—'यदि वचनमात्रेणैवाधिपत्यं सिद्ध्यति। तदा जम्बूद्वीपेऽप्यस्मत्प्रभोर्हिरण्यगर्भस्य स्वाम्यमस्ति।' शुको ब्रूते—'कथमत्र निर्णयः?' मयोक्तम्—'संग्राम एव।' राज्ञा विहस्योक्तम्—'स्वस्वामिनं गत्वा सज्जीकुरु।' तदा मयोक्तम्—स्वदूतोऽपि प्रस्थाप्यताम्।' राजोवाच—'कः प्रस्थाप्यते दौत्येन? यत एवंभूतो दूतः कार्यः? 15

भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी।
ब्राह्मणः परमर्मज्ञो दूतः स्यात् प्रतिभानवान्'॥ २१॥ 20

गृध्रो वदति—'सन्त्येव दूता बहवः। किंतु ब्राह्मण एव कर्तव्यः। यतः।

प्रसादं कुरुते पत्युः संपत्तिं नाभिजातता।
कालिमा कालकूटस्य नापैतीश्वरसंगमात्' ॥ २२ ॥

5 राजाह—'ततः शुक एव व्रजतु। शुक, त्वमेवानेन सह गत्वास्मदभिलषितं ब्रूहि।' शुको ब्रूते—'यथाज्ञापयति देवः। किं त्वयं दुर्जनो बकः। दुर्जनेन सह कश्चिन्न गच्छामि। तथा चोक्तम्—

खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
10 दशाननोऽहरत्सीतां बन्धनं स्यान्महोदधेः ॥ २३ ॥

अपरं च।

न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्।
काकसङ्गाद्धतो हंसस्तिष्ठन्गच्छंश्च वर्तकः' ॥ २४ ॥

राजोवाच—कथमेतत्?' शुकः कथयति—

15 कथा ४।

अस्त्युज्जयिनीवर्त्मनि प्रान्तरे महान् पिप्पलवृक्षः। तत्र हंसकाकौ निवसतः। कदाचिद्ग्रीष्मसमये परिश्रान्तः कश्चित् पथिकस्तरुतले धनुःकाण्डं संनिधाय सुप्तः। ततः क्षणान्तरे तन्मुखाद्वृक्षच्छायाऽपगता। ततः सूर्यतेजसा तन्मुखं व्याप्तमवलोक्य
20 कृपया वृक्षस्थितेन हंसेन पक्षौ प्रसार्य च्छाया कृता। ततो निर्भरनिद्रासुखेन तेन मुखव्यादानं कृतम्। अथ परसुखमसहिष्णुः स्वभावदौर्जन्येन स काकस्तन्मुखे पुरीषोत्सर्गं कृत्वा पलायितः।

ततोऽसावुत्थायोर्ध्वं यावत् पश्यति, तावद्धंसो दृष्टस्तेन शरेण हत्वा व्यापादितः । यतः ।

त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर नित्यमनित्यताम् ॥ २५ ॥

देव, वर्तकवार्तामपि कथयामि— 5

## कथा ५ ।

एकदा सर्वे पक्षिणो भगवतो गरुडस्य यात्राप्रसङ्गेन समुद्रतीरं चलिताः । तत्र काकेन सह स वर्तकश्चलितः । अथ गच्छतो गोपस्य शिरसि स्थिताद्दधिभाण्डाद्दधि वारंवारं तेन काकेन खाद्यते । ततो यावदसौ दधिभाण्डं भूमौ निधायोर्ध्वमवलोकते, 10 तावत् तेन काकवर्तकौ दृष्टौ । ततस्तेन खेदितः काकः पलायितः । वर्तकः स्वभावनिरपराधो मन्दगतिस्तेन प्राप्तो व्यापादितः । अतोऽहं ब्रवीमि—'न स्थातव्यं न गन्तव्यम्' इत्यादि ॥

ततो मयोक्तम्—'भ्रातः शुक, किमेवं ब्रवीषि ? मां प्रति यथा श्रीमद्देवपादास्तथा भवानपि ।' शुको ब्रूते—एवमस्तु । किंतु, 15

दुर्जनैरुच्यमानानि सस्मितानि प्रियाण्यपि ।
अकालकुसुमानीव भयं संजनयन्ति मे ॥ २६ ॥

दुर्जनत्वं च भवतो वाग्व्यापारादेव प्रत्यक्षीकृतं, यदनयोर्भूपालयोर्विग्रहे भवद्वचनं निदानम् । पश्य ।

प्रत्यक्षेऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति । 20
रथकारो निजां भार्यां सजारां शिरसाकरोत्' ॥ २७ ॥

राजोवाच—'कथमेतत् ?' शुकः कथयति—

## कथा ६।

अस्ति श्रीनगरे मन्दमतिर्नाम रथकारः। स च स्वभार्यां बन्धकीं जानाति। किं तु जारेण समं स्वचक्षुषैकस्थाने न पश्यति। ततोऽसौ रथकारोऽन्यग्रामं गमिष्यामीत्युक्त्वा चलितः। कियद्दूरं गत्वा पुनरागत्य स्वगृहे खट्वातलं प्रविश्य निभृतं स्थितः। अथ तया भर्ता ग्रामान्तरं गत इति विश्वासाज्जारः सन्ध्याकाल आहूतः। पश्चात् तेन सा तस्यां खट्वायां निर्भरं क्रीडति। खट्वातले किञ्चिदङ्गस्पर्शात् स्वामिनं विज्ञाय सा विषण्णाऽभवत्। ततो जारेणोक्तम्—'किं मया सहाद्य निर्भरं न रमसे? विस्मितेव प्रतिभासि!' तयोक्तम्—'योऽसौ प्राणेश्वरः सोऽद्य ग्रामान्तरं गतः। तेन सकलजनपूर्णोऽप्ययं ग्रामो मां प्रत्यरण्यमिव प्रतिभाति। किं भावि तत्र परस्थाने? किं खादितवान्। कथं वा प्रसुप्त इत्यस्मद्धृदयं विदीर्यते'। जारेणोक्तम्—'तत् किमेवंविधः स्नेहभूमिस्ते रथकारो यः कलहकारी बन्धकीति ब्रूते?' ततस्तयोक्तम्—'रे बर्वर, किं ब्रवीषि। शृणु।

> परुषाण्यपि या चोक्ता या दृष्टा वा क्रोधचक्षुषा।
> या प्रसन्नमुखी भर्तुः सा नारी धर्मभागिनी॥ २८॥

अपरं च।

> नगरस्थो वनस्थो वा पापो वा यदि वाशुचिः।
> यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः॥२९॥

अन्यच्च।

> भर्ता हि परमं नार्याभूषणं भूषणैर्विना।
> एषा विरहिता तेन शोभनापि न शोभना॥ ३०॥

त्वं जारः मनोलौल्यात् पुष्पताम्बूलसदृशः कदाचित् सेव्यसे । स च स्वामी मां विक्रेतुं देवेभ्यो ब्राह्मणेभ्योऽपि दातुं समर्थः स्यात् । किं बहुना ?

तस्मिन् जीवति जीवामि मृते तस्मिन् म्रिये पुनः ।
तन्मृतौ चानुमरणमेष मे दृढनिश्चयः ॥ ३१ ॥ 5

यतः ।

तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानवे ।
तावत्कालं वसेत्स्वर्गे भर्तारं यानुगच्छति ॥ ३२ ॥

अन्यच्च ।

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात् । 10
तद्वद्भर्तारमादाय स्वर्गलोके महीयते ॥ ३३ ॥

अपरं च ।

चितौ परिष्वज्य विचेतनं पतिं
प्रिया हि या मुञ्चति देहमात्मनः ।
कृत्वाऽतिपापं शतलक्षमप्यसौ 15
पतिं गृहीत्वा सुरलोकमाप्नुयात्' ॥ ३४ ॥

यतः ।

यस्मै दद्यात् पिता त्वेनां भ्राता चानुमते पितुः ।
तं शुश्रूषेत जीवन्तं संस्थितं च न लङ्घयेत् ॥ ३५ ॥

एतत्सर्वं श्रुत्वा स रथकारो 'धन्योऽहं यस्यैतादृशी भार्या स्नेहवती प्रियवादिनी' इति मनसि निधाय तां खट्वां स्त्रीपुरुषसहितां मूर्ध्नि कृत्वा, चिरं ननर्त । अतोऽहं ब्रवीमि 'प्रत्यक्षेऽपि कृते दोषे' इत्यादि ॥ 20

अतोऽहं तेन राज्ञा यथाव्यवहारं संपूज्य प्रस्थापितः। शुकोऽपि मम पश्चादागच्छन्नास्ते। एतत्सर्वं ज्ञात्वा यथाकर्तव्यमनुष्ठीयता' मिति ॥

चक्रवाको विहस्याह—'देव, बकेन तावद्देशान्तरं गत्वा
5 यथाशक्ति राजकार्यमनुष्ठितम्। किंतु स्वभाव एष मूर्खाणाम्। यतः।

शतं दद्यान्न विवदेदिति प्राज्ञस्य लक्षणम्।
विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम्' ॥ ३६ ॥

राजाह—'अलमनेनोपालम्भेन। प्रस्तुतमनुसंधीयताम्।' चक्र-
10 वाको ब्रूते—'देव, विजने ब्रवीमि। यतः।

वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत्' ॥ ३७ ॥

ततो राजा मन्त्री च तत्र स्थितौ। अन्येऽन्यत्र गताः। चक्रवाको ब्रूते—'देवाहमेवं जानामि। कस्याप्यस्मन्नियोगिनः प्रेरणया
15 बकेनेदमनुष्ठितम्। यतः।

वैद्यानामातुरः श्रेयान्व्यसनी यो नियोगिनाम्।
विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम्' ॥ ३८ ॥

राजाब्रवीत्—'भवतु। कारणमत्र पश्चान्निरूपणीयम्। संप्रति यत्कर्तव्यं तद्ब्रूहि।' चक्रवाको ब्रूते—'प्रणिधिः प्रहीयताम्।
20 ततस्तदनुष्ठानं बलाबलं च जानीमः। यतः।

भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने।
चारश्चक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः ॥ ३९ ॥

स च द्वितीयं विश्वासपात्रं गृहीत्वा यातु । तेनासौ स्वयं तत्रावस्थाय द्वितीयं तत्रत्यमन्त्रकार्यं सुनिभृतं निश्चित्य निगद्य प्रस्थापयिष्यति । तथा चोक्तम्——

तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना ।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत् ॥ ४० ॥ 5

गूढचारश्च यो जले स्थले चरति, ततोऽसावेव बको नियुज्यताम् । एतादृश एव कश्चिद्बको द्वितीयत्वेन प्रयातु । तद्गृहलोकाश्च राजद्वारे तिष्ठन्तु । किंतु देव, एतदपि सुगुप्तमनुष्ठातव्यम् । यतः ।

षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया ।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता ॥ ४१ ॥ 10

अपरं च ।

मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपतेः ।
न शक्यास्ते समाधातुमिति नीतिविदां मतम् ' ॥ ४२ ॥

राजा विमृश्योवाच——'प्राप्तस्तावन्मयोत्तमः प्रणिधिः ।' मन्त्री ब्रूते——'देव, तदा संग्रामे जयोऽपि प्राप्तः' अत्रान्तरे प्रतीहारः 15 प्रविश्य प्रणम्योवाच–'देव, जम्बूद्वीपादागतो द्वारि शुकस्तिष्ठति' राजा चक्रवाकमालोकते । चक्रवाकेनोक्तम्——'तावद्गत्वावासे तिष्ठतु । पश्चादानीय द्रष्टव्यः ।' यथाज्ञापयति देव' इत्यभिधाय प्रतीहारः शुकं गृहीत्वा गतः । राजाह——'विग्रहस्तावदुपस्थितः' चक्रवाको ब्रूते——'देव, तथापि । सहसा विग्रहो न विधिः । 20

स किंभृत्यः स किंमन्त्री य आदावेव भूपतिम् ।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम् ॥ ४३ ॥

अपरं च ।

विजेतुं यतते चारीन् स युद्धेन कदाचन ।
अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः ॥ ४४ ॥

अन्यच्च ।

5 साम्ना दानेन भेदेन समस्तैरथवा पृथक् ।
साधितुं प्रयतेतारीन् न युद्धेन कदाचन ॥ ४५ ॥

यतः ।

सर्व एव जनः शूरो ह्यनासादितविग्रहः ।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन्नहि ॥ ४६ ॥

10 किं च ।

न तथोत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा ।
अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत् ॥ ४७ ॥

किंतु विग्रहमुपस्थितं विलोक्य व्यवह्रियताम् । यतः ।

यथाकालकृतोद्योगात् कृषिः फलवती भवेत् ।
15 तद्वन्नीतिरियं देव चिरात्फलति न क्षणात् ॥ ४८ ॥

अपरं च ।

महतो दूरभीरुत्वमासन्ने शूरतागुणः ।
विपत्तौ हि महान् लोके धीरत्वमनुगच्छति ॥ ४९ ॥

अन्यच्च ।

20 प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल ।
अतिशीतलमप्यम्भः किं भिनत्ति न भूभृतः ॥ ५० ॥

विशेषतश्च महाबलोऽसौ चित्रवर्णो राजा । यतः ।

बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
तद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत् ॥ ५१ ॥

अन्यच्च ।

स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते ।
कलिर्बलवता सार्धं कीटपक्षोद्गमो तथा ॥ ५२ ॥ 5

किं च ।

कौर्मं संकोचमास्थाय प्रहारमपि मर्षयेत् ।
प्राप्तकाले तु नीतिज्ञ उत्तिष्ठेत्क्रूरसर्पवत् ॥ ५३ ॥
महत्यल्पेऽप्युपायज्ञः सम एव भवेत्क्षमः ।
समुन्मूलयितुं वृक्षान् तृणानीव नदीरयः ॥ ५४ ॥ 10

अतस्तद्दूतोऽप्याश्वास्य तावद्ध्रियतां यावद्दुर्गः सज्जीक्रियते । यतः ।

एकः शतं योधयति प्राकारस्थो धनुर्धरः ।
शतं शतसहस्राणि तस्माद्दुर्गं विशिष्यते ॥ ५५ ॥

किं च ।

अदुर्गविषयः कस्य नारेः परिभवास्पदम् । 15
अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत् ॥ ५६ ॥
दुर्गं कुर्यान्महाखातमुच्चप्राकारसंयुतम् ।
सयन्त्रं सजलं शैलसरिन्मरुवनाश्रयम् ॥ ५७ ॥
विस्तीर्णताऽतिवैषम्यं रसधान्येध्मसंग्रहः ।
प्रवेशश्चापसारश्च सप्तैता दुर्गसंपदः ॥ ५८ ॥ 20
स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
परस्परोपकारीणि राज्यं सप्ताङ्गमुच्यते ॥ ५९ ॥

दुर्गाध्यक्षो बलाध्यक्षो धनाध्यक्षश्च भूपतिः ।
दूतः पुरोधा दैवज्ञो भिषजो मन्त्रिणो मताः ॥ ६० ॥

राजाह—'दुर्गस्यानुसंधाने को नियुज्यताम्?' चक्रवाको ब्रूते

'यो यत्र कुशलः कार्ये तत्र तं विनियोजयेत् ।
5 कार्येष्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥ ६१ ॥

तदाहूयतां सारसः ।' तथाऽनुष्ठिते सति समागत सारसमालोक्य राजोवाच—'भोः सारस, त्वं सत्वरं दुर्गमनुसंधेहि?' सारस प्रणम्योवाच—'देव, दुर्गं तावदिदं पुरात् सुनिरूपितमास्ते महत्सरः । किं त्वेतन्मध्यवर्तिनि द्वीपे धान्यसंग्रहः क्रियताम्
10 यतः ।

धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात् ।
निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥ ६२ ॥

किं च ।

ख्यातः सर्वरसानां हि लवणो रस उत्तमः ।
15 गृह्णीयात् तं विना तेन व्यञ्जनं गोमयायते' ॥ ६३ ॥

राजाह—'सत्वरं गत्वा सर्वमनुष्ठीयताम्'—

पुनः प्रविश्य प्रतीहारो ब्रूते—'देव, सिंहलद्वीपादागतो मेघवर्णो नाम वायसः सपरिवारो द्वारि तिष्ठति । देवपादान् द्रष्टुमिच्छति ।' राजाह—'काकः प्राज्ञो बहुद्रष्टा च । तद्भवति
20 संग्राह्यः' चक्रवाको ब्रूते—'काकः स्थलचरः । वयं जलचराः । तेनास्मद्विपक्षपक्षे विक्षिप्तः कथं संगृह्यते । तथा चोक्तम्—

आत्मपक्षं परित्यज्य परपक्षे तु यो रतः ।
स परैर्हन्यते मूढो नीलवर्णसृगालवत् ' ॥ ६४ ॥

राजोवाच—'कथमेतत् ?' मन्त्री कथयति—

कथा ७ ।

अस्ति कस्मिंश्चिद्वने सृगालः कश्चित् । स स्वेच्छया नगरोपान्ते भ्राम्यन्नीलीपात्त्रभाण्डे निपतितः । पश्चादुत्थातुमसमर्थः प्रातरात्मानं मृतवत्संदर्श्य स्थितः । अथ नीलीभाण्डस्वामिना स सृगाल ऊर्ध्वचरणो निमीलितनयनो निष्कासितदन्तो मृत इति मत्वा तत उत्थाप्य दूरं नीत्वा परित्यक्तः पलायितः । ततोऽसौ वनं गत्वात्मानं नीलवर्णमवलोक्याचिन्तयत्—'अहमिदानीं नीलवर्ण उत्तमवर्णः । तदात्मन उत्कर्षं किं न साधयामि ?' इति मत्वा सृगालानाहूय तेनोक्तम्—'अहं भगवत्या वनदेवतया स्वहस्तेनारण्यराज्ये सर्वौषधिरसेनाभिषिक्तः । पश्यत यूयं मम वर्णम् । तदद्यारभ्यास्मदाज्ञयाऽस्मिन्नरण्ये व्यवहारः कार्यः ।' सृगालाश्च तं विशिष्टवर्णमवलोक्य साष्टाङ्गपातं प्रणम्योचुः—'यथाज्ञापयति देवः ।' ततोऽनेन क्रमेण सर्वेषु पशुषु स्वाधिपत्यं तेन स्वज्ञातिभिरावृतेनाधिकं साधितम् । ततस्तेन सिंहव्याघ्रादीनुत्तमपरिजनान् प्राप्य सृगालानवलोक्य लज्जमानेनावज्ञाय स्वज्ञातयस्सर्वे दूरीकृताः । ततो विषण्णान् सृगालानवलोक्य वृद्धसृगालेन प्रतिज्ञातम्—'मा विषीदत । एवं चेदनेनानीतिज्ञेन वयं मर्मज्ञाः परिभूताः । तद्यथाऽयं नश्यति तन्मया विधेयम् । यतोऽत्र व्याघ्रादयो वर्णमात्रविप्रलब्धाः सृगालमज्ञात्वा राजान-

मेनं सेवन्ते । तद्यथाऽयं परिचीयते तथा कुरुत । तत्रैवमनुष्ठेयम् । यत् सन्ध्यासमयेऽस्य संनिधाने महारावमेकं करिष्यथ । ततस्तं शब्दमाकर्ण्य जातिस्वभावात् तेनाऽपि शब्दः कर्तव्यः । ततस्तथाऽनुष्ठिते सति तद्वृत्तम् । यतः ।

5 यः स्वभावो हि यस्य स्यात् तस्यासौ दुरतिक्रमः ।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ॥ ६५ ॥

ततस्तथाऽनुष्ठिते सृगालोऽयमित्यभिज्ञाय व्याघ्रेण हतः । तथा चोक्तम्—

छिद्रं मर्म च वीर्यं च सर्वं वेत्तीह यो रिपुः ।
10 दहत्यन्तर्गतश्चैव शुष्कवृक्षमिवानलः ॥ ६६ ॥

अतोऽहं ब्रवीमि—'आत्मपक्षं परित्यज्य' इत्यादि ॥

राजाह—'यद्येवं तथाऽपि दृश्यतां तावदयं दूरादागतः । तत्संग्रहे विचारः कार्यः ।' चक्रवाको ब्रूते—'देव, प्रणिधिः प्रहितो दुर्गं च सज्जीकृत मतः शुकोऽप्यानीय प्रस्थाप्यताम् ।
15 यतः ।

नन्दं जघान चाणक्यस्तीक्ष्णदूतप्रयोगतः ।
तद्दारान्तरितं दूतं पश्येद्वीरसमन्वितः ॥ ६७ ॥

ततः सभां कृत्वाहूतः शुकः काकश्च । शुकः किंचिदुन्नतशिराः दत्तासन उपविश्य ब्रूते—'भो हिरण्यगर्भ, महाराजाधिराजः
20 श्रीमच्चित्रवर्णस्त्वां समाज्ञापयति । यदि जीवितेन श्रिया वा प्रयोजनमस्ति, तदा सत्वरमागत्यास्मच्चरणौ प्रणम । न चेदवस्थातुं स्थानान्तरं चिन्तय ।' राजा सकोपमाह—'आः, कोऽप्यस्माकं

पुरतो नास्ति, य एनं गलहस्तयति ?' तत उत्थाय मेघवर्णो ब्रूते—
'देव, आज्ञापय । हन्मि दुष्टं शुकम् ।' अत्रान्तरे चक्रवाको
राजानं काकं च सान्त्वयन्नाह—'शृणुतं तावत् ।

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् । 5
धर्मः समो यत्र न सत्यमस्ति
सत्यं न तद्यच्छलमभ्युपैति ॥ ६८ ॥

यतो धर्मश्चैवं किं च ।

दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः ।
उद्यतेष्वपि शस्त्रेषु नृपतेः किं पुनर्द्विजः ॥ ६९ ॥ 10

तथा हि ।

स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः ।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति' ॥ ७० ॥

ततो राजा काकश्च स्वां प्रकृतिमापन्नौ । शुकोऽप्युत्थाय चालितः ।
पश्चाच्चक्रवाकेणानीय प्रबोध्य कनकालंकारादिकं दत्त्वा संप्रेषितः 15
स्वदेशं ययौ । ततो विन्ध्याचलं गत्वा स्वराजं चित्रवर्णं प्रणत-
वान् । तमालोक्य चित्रवर्णो राजाह—'शुक, का वार्ता ? की
दृशोऽसौ देशः ?' शुको ब्रूते—'देव संक्षेपादियं वार्ता । संप्रति
युद्धोद्योगः क्रियताम् । देशश्चासौ कर्पूरद्वीपः स्वर्गैकदेशः ।
राजा च द्वितीयः स्वर्गपतिः । कथं वर्णयितुं शक्यते ?' ततः 20
सर्वान् शिष्टानाहूय राजा मन्त्रयितुमुपविष्टः । स आह—'संप्रति
कर्तव्यविग्रहविषये यथाकर्तव्यमुपदिश्यताम् । विग्रहोऽवश्यं
कर्तव्यः । तथा चोक्तम्—

असंतुष्टा द्विजा नष्टाः संतुष्टा इव पार्थिवाः ।
सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना ' ॥ ७१ ॥

दूरदर्शी नाम गृध्रो ब्रूते—' देव, व्यसनितया विग्रहो न विधिः । यतः ।

5 मित्रामात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः ।
शत्रूणां विपरीताश्च कर्तव्यो विग्रहस्तदा ॥ ७२ ॥

अन्यच्च ।

भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम् ।
यदैतन्निश्चितं भावि कर्तव्यो विग्रहस्तदा ' ॥ ७३ ॥

10 राजाह—' मद्बलं तावदवलोकयतु मन्त्री । तदैतेषामुपयोगो ज्ञायताम् । एवमाहूयतां मौहूर्तिकः । शुभलग्नं यात्रार्थं करोतु । ' मन्त्री वदति—' देव, तथाऽपि सहसा यात्राकरणमयुक्तम् । यतः ।

विशन्ति सहसा मूढा येऽविचार्य द्विषद्बलम् ।
15 खड्गधारापरिष्वङ्गं लभन्ते ते सुनिश्चितम् ' ॥ ७४ ॥

राजाह—' मन्त्रिन्, ममोत्साहभङ्गं सर्वथा मा कृथाः । विजिगीषुर्यथा परभूमिमाक्रामति तथा कथय । '

गृध्रोऽब्रवीत्—' देव, तत्कथयामि । किंतु तदनुष्ठितमेव फलप्रदम् । तथा चोक्तम्—

20 किं मन्त्रेणाननुष्ठाने शास्त्रवत् पृथिवीपते ।
न ह्यौषधपरिज्ञानाद्व्याधेः शान्तिः क्वचिद्भवेत् ॥ ७५ ॥

राजादेशश्चानतिक्रमणीय इति यथाश्रुतं निवेदयामि । शृणु देव—

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप ।
तत्र तत्र च सेनानीर्यायाद्व्यूहीकृतैर्बलैः ॥ ७६ ॥
बलाध्यक्षः पुरो यायात् प्रवीरपुरुषान्वितः ।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद्धनम् ॥ ७७ ॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः । 5
रथानां पार्श्वतो नागा नागानां च पदातयः ॥ ७८ ॥
पश्चात् सेनापतिर्यायात्खिन्नानाश्वासयञ्छनैः ।
मन्त्रिभिः सुभटैर्युक्तः प्रतिगृह्य बलं नृपः ॥ ७९ ॥
समेयाद्विषमं नागैर्जलाढ्यं समहीधरम् ।
सममश्वैर्जलं नौभिः सर्वत्रैव पदातिभिः ॥ ८० ॥ 10
हस्तिनां गमनं प्रोक्तं प्रशस्तं जलदागमे ।
तदन्यदा तुरंगाणां पत्तीनां सर्वदैव हि ॥ ८१ ॥
शैलेषु दुर्गमार्गेषु विधेयं नृपरक्षणम् ।
स्वयोधै रक्षितस्यापि शयनं योगनिद्रया ॥ ८२ ॥
नाशयेत्कर्षयेच्छत्रून् दुर्गैः कण्टकमर्दनैः । 15
परदेशप्रवेशे च कुर्यादाटविकान्पुरः ॥ ८३ ॥
यत्र राजा तत्र कोशो विना शोकं न राजता ।
स्वभृत्येभ्यस्ततो दद्यात् को हि दातुर्न युध्यते ॥ ८४ ॥

तः ।

न नरस्य नरो दासः दासस्त्वर्थस्य भूपते । 20
गौरवं लाघवं वापि धनाधननिबन्धनम् ॥ ८५ ॥
अभेदेन च युध्येत रक्षेच्चैव परस्परम् ।
फल्गुसैन्यं च यत्किंचिन्मध्ये व्यूहस्य कारयेत् ॥ ८६ ॥

पदातींश्च महीपालः पुरोऽनीकस्य योजयेत् ।
उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ॥ ८७ ॥
स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा ।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥ ८८ ॥
5 दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ।
भिन्द्याच्चैव तटाकानि प्राकारान् परिखास्तथा ॥ ८९ ॥
बलेषु प्रमुखो हस्ती न तथाऽन्यो महीपतेः ।
निजैरवयवैरेव मातङ्गोऽष्टायुधः स्मृतः ॥ ९० ॥
बलमश्वश्च सैन्यानां प्राकारो जङ्गमो यतः ।
10 तस्मादश्वाधिको राजा विजयी स्थलविग्रहे ॥ ९१ ॥
तथा चोक्तम् ।
युध्यमाना हयारूढा देवानामपि दुर्जयाः ।
अपि दूरस्थितास्तेषां वैरिणो हस्तवर्तिनः ॥ ९२ ॥
प्रथमं युद्धकारित्वं समस्तबलपालनम् ।
15 दिङ्मार्गाणां विशोधित्वं पत्तिकर्म प्रचक्षते ॥ ९३ ॥
स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम् ।
प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥ ९४ ॥
यथा प्रभुकृतान्मानाद्युध्यन्ते भुवि मानवाः ।
न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥ ९५ ॥
20 वरमल्पं बलं सारं न बह्वी मुण्डमण्डली ।
कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥ ९६ ॥
अप्रसादोऽनधिष्ठानं देयांशहरणं च यत् ।
कालयापोऽप्रतीकारस्तद्वैराग्यस्य कारणम् ॥ ९७ ॥

आपीडयन् बलं शत्रोर्जिगीषुरतिशोषयेत् ।
सुखसाध्यं द्विषां सैन्यं दीर्घकालप्रपीडितम् ॥ ९८ ॥
दायाददपरो मन्त्री नास्ति भेदकरो द्विषाम् ।
तस्मादुत्थापयेद्यत्नाद्दायादं तस्य विद्विषः ॥ ९९ ॥
संधाय युवराजेन यदि वा मुख्यमन्त्रिणा । 5
अन्तः प्रकोपनं कार्यमभियोक्तुः स्थिरात्मनः ॥ १०० ॥
द्वेष्यं मित्रं परैश्चापि भङ्गं दत्त्वाऽभिघातयेत् ।
अथवा गोग्रहाकृष्टया तल्लक्ष्याश्रितबन्धनात् ॥ १०१ ॥
स्वराष्ट्रं वासयेद्राजा परदेशावगाहनात् ।
अथवा दानमानाभ्यां वासितं धनदं हि तत्' ॥१०२॥ 10

राजाह—'आः, किं बहुनोदितेन ?

आत्मोदयः परग्लानिर्द्वयं नीतिरितीयती ।
इत्यूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतायते' ॥ १०३ ॥

मन्त्रिणा विहस्योक्तम्—सर्वमेतद्विशेषतश्चोच्यते । किंतु ।

अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् । 15
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ?' ॥१०४॥

तत उत्थाय राजा मौहूर्तिकावेदिते लग्ने प्रस्थितः ।

अथ प्रहितः प्रणिधिश्च हिरण्यगर्भसमीपमागत्य प्रणम्योवाच—'देव, समागतप्रायो राजा चित्रवर्णः । संप्रति मलयपर्वतोपत्यकायां स्कन्धावारे वर्तते । दुर्गशोधनं प्रतिक्षणमनुसंधातव्यम् । यतोऽसौ गृध्रो महामन्त्री । किंच केनचित्सह तस्य विश्वासकथाप्रसङ्गेनैतदिङ्गितमवगतम् । यदेतेन कोऽप्यस्मद्दुर्गे 20

प्रागेव नियुक्तः। चक्रवाको ब्रूते—'देव, काक एवासौ संभवति।' राजाह—'न कदाचिदेतत्। यद्येवं तदा कथं तेन शुकस्याभिभवायोद्योगः कृतः? अपरं च। शुकस्यागमनात्तस्य विग्रहोत्साहः। स चिरादत्रास्ते।' मन्त्री वदति—'तथाऽप्यागन्तुः शङ्क-
5 नीयः।' राजाह—

'आगन्तुका हितकरा दृश्यन्ते हि कश्चित् शृणु।
परोऽपि हितवान् बन्धुः बन्धुरप्यहितः परः॥
अहितो देहजो व्याधिर्हितमारण्य मौषधम्॥१०५॥

अपरं च।

10 आसीद्वीरवरो नाम शुभ्रकस्य महीपतेः।
सेवकः स्वल्पकालेन स ददौ सुतमात्मनः' ॥ १०६ ॥

चक्रवाकः पृच्छति 'कथमेतत्?' राजा कथयति—

## कथा ८।

अहं पुरा शुभ्रकस्य राज्ञः क्रीडासरसि कर्पूरकेलिनाम्नो राज-
15 हंसस्य पुत्र्या कर्पूरमञ्जर्या सहानुरागवानभवम्। तत्र वीरवरो नाम राजपुत्रः कुतश्चिद्देशादागत्य राजद्वारि प्रतिहारमुपागम्योवाच—'अहं वर्तनार्थी राजपुत्रः। मां राजदर्शनं कारय।' ततस्तेनासौ राजदर्शनं कारितो ब्रूते—'देव, यदि मया सेवकेन प्रयोजनमस्ति, तदाऽस्मद्वर्तनं क्रियताम्।' शुभ्रक उवाच—किं ते
20 वर्तनम्?' वीरवरेणोक्तम्—'प्रत्यहं सुवर्णशतचतुष्टयम्।' राजाह—'का ते सामग्री?' वीरवरो ब्रूते—'द्वौ बाहू तृतीयश्च खड्गः।' राजाह—'नैतच्छक्यम्?' तच्छ्रुत्वा वीरवरः प्रणम्य चलितः।

अथ मन्त्रिभिरुक्तम्—'देव, दिनचतुष्टयस्य वर्तनं दत्त्वा ज्ञायतामस्य स्वरूपम् । किमुपयुक्तोऽयमेतावद्वर्तनं गृह्णात्यनुपयुक्तो वेति ।' राजा मन्त्रिवचनादाहूय वीरवराय ताम्बूलं दत्त्वा तद्वर्तनं दत्तवान् । यतः ।

ताम्बूलं कटुतिक्तमिश्रमधुरं क्षारं कषायान्वितं
वातघ्नं कफनाशनं क्रिमिहरं दौर्गन्ध्यदोषापहम् ।
वक्त्रस्याभरणं मलापहरणं कामाग्निसंदीपनं
ताम्बूलस्य सखे त्रयोदश गुणाः स्वर्गेऽप्यमी दुर्लभाः ॥

वर्तनविनियोगश्च राज्ञा सुनिभृतं निरूपितः । तदर्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तम् । अपरस्तृतीयो भागो दीनेभ्यो दत्तस्तदवशिष्टं च भोजनाय विलासाय च व्ययितः । एतत्सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते । यदा च राजा स्वयं समादिशति, तदा स्वगृहमपि याति ॥

अथ कृष्णचतुर्दश्यां रात्रौ राजा सकरुणक्रन्दनध्वनिं शुश्राव । शुद्रक उवाच—'कः कोऽत्र द्वारि तिष्ठति ?' तदा तेनोक्तम्—'देवाहं वीरवरः ।' राजोवाच—'क्रन्दनानुसरणं क्रियताम् ।' सोऽपि 'यदाज्ञापयति देव' इत्युक्त्वा चलितः । राज्ञा चिन्तितम्—'अयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि प्रहितस्तदनुचितम् । अहमपि गत्वा निरूपयामि ।' ततो राजापि खड्गमादाय तदनु चलितो नगराद्बहिर्जगाम । ततो गत्वा च वीरवरेण रुदन्ती रूपयौवनसंपन्ना सर्वालंकारभूषिता काचित् स्त्री दृष्टा पृष्टा च—'का त्वम् ? किमर्थं रोदिषि ?' इति । स्त्रियोक्तम्—

अहमेतस्य शुभ्रकस्य राज्ञो लक्ष्मीश्चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता । इदानीमन्यत्र गमिष्यामि ।' इति दुःखिता ।' वीरवरो ब्रूते—'यत्रापायः संभवति तत्रोपायस्तिष्ठति । तत्कथं स्यात् पुनरिहावलम्बनं भगवत्याः ।' लक्ष्मीरुवाच—'यदि त्वमात्मनः पुत्रं शक्तिवरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमङ्गलाया उपहारीकरोषि तदाहं पुनरत्र सुचिरं निवसामि' इत्युक्त्वादृश्याभवत् ।

ततो वीरवरेण स्वगृहं गत्वा निद्रायमाणा स्ववधूः प्रबोधिता पुत्रश्च । तौ निद्रां परित्यज्योत्थायोपविष्टौ । वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान् । तच्छ्रुत्वा शक्तिवरः सानन्दो ब्रूते—'धन्योऽहमेवंभूतः, स्वामिराज्यरक्षायां यस्योपयोगस्तावत् । को विलम्बनहेतुः ? एवंविधे कर्मणि देहस्य विनियोगः श्लाघ्यः । यतः ।

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
तन्निमित्तो वरं त्यागो विनाशे नियते सति' ॥ १०८ ॥

शक्तिधरमातोवाच—'अस्मत्कुलोचितं यद्येतन्न कर्तव्यं तदा केनापरेण कर्मणाऽस्य महावर्तनस्य निस्तारो भवेत् ?' इत्यालोच्य सर्वे सर्वमङ्गलायतनं गताः । तत्र सर्वमङ्गलां संपूज्य वीरवरो ब्रूते—'देवि, प्रसीद । विजयतां शुभ्रको महाराजः । गृह्यतामयमुपहारः' इत्युक्त्वा पुत्रस्य शिरश्चिच्छेद । ततो वीरवरश्चिन्तयामास—'गृहीतराजवर्तनस्य निस्तारः कृतः । संप्रत्यपुत्रस्य जीवनविडम्बनेनालम् ।' इत्यालोच्यात्मनः शिरश्छिन्नवान् । ततः स्त्रियाऽपि स्वामिपुत्रशोकार्तया तथैवानुष्ठितम् ।

ततः स राजा एतत्सर्वं श्रुत्वा दृष्ट्वा च चिन्तयामास—

'जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ १०९ ॥

एतत्परित्यागाद्राज्येन मम किं प्रयोजनम् ?'। ततः स्वशिरश्छेत्तुं शूद्रकेण राज्ञा खड्ग उत्थापितः । अथ भगवत्या सर्वमङ्गलया 5 प्रत्यक्षीभूतया राजहस्तो धृतः । उक्तं च—'पुत्र, प्रसन्नाऽस्मि ते । अलं साहसेन । जीवनान्तेऽपि तव राज्यभङ्गो नास्ति ।' राजा च साष्टाङ्गपातं प्रणम्योवाच—'देवि, राज्येन वा मम प्रयोजनं नास्ति। यदि मय्यनुकम्पा क्रियते तदा ममायुश्शेषेणाप्ययं राजपुत्रः सपुत्रदारो जीवतु। अन्यथाऽहं यथाप्राप्तं गतिं गच्छा- 10 मि ।' भगवत्युवाच—'अनेन ते सत्त्वोत्कर्षेण भृत्यवात्सल्येन च तुष्टाऽस्मि । गच्छ । विजयीभव । अयमपि सपरिवारो राज- पुत्रो जीवतु ।' इत्युक्त्वा देव्यदृश्याऽभवत् । राजा तां प्रणम्या- लक्षितश्चलितः । प्रासादपृष्ठं तदैव गत्वा सुप्तः । वीरवरोऽपि स- पुत्रदारः प्राप्तजीवनः स्वगृहं गतः । अथ पुनर्द्वारस्थो वीरवरो 15 भूपालेन पृष्टः सन्नाह—'देव, सा रुदती स्त्री मामवलोक्यादृ- श्याऽभवत् । न काऽप्यन्या वार्ता विद्यते ।' तद्वचनमाकर्ण्य राजा चिन्तयत्—'कथमयं श्लाघ्यो महासत्त्वः । यतः ।

प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता सत्पात्रवर्षी स्यात् प्रगल्भः स्यादनिष्ठुरः ॥११० ॥ 20

एतन्महापुरुषलक्षणमेतस्मिन् सर्वमस्ति ।' ततः स राजा प्रातः शिष्टसभां कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात्तस्मै कर्नाटराज्यं ददौ ।

अतस्ते तस्य प्रमादिनो बलं गत्वा यथावकाशं दिवानिशं घ्नन्तु अस्मत्सेनापतयः ।' तथाऽनुष्ठिते चित्रवर्णस्य सैनिकाः सेनापतयश्च बहवो निहताः । ततश्चित्रवर्णो विषण्णः स्वमन्त्रिणं दूरदर्शिनमाह—'तात, किमित्यस्मदुपेक्षा क्रियते ? किं कोऽप्यविनयो
5 ममास्ति । तथा चोक्तम्—

न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२० ॥

अपि च ।

दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी ।
10　उद्युक्तो विद्यान्तं धर्मार्थयशांसि च विनीतः' ॥ १२१ ॥

गृध्रोऽवदत्—'देव, शृणु ।

अविद्वानपि भूपालो ज्ञानवृद्धोपसेवया ।
परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥ १२२ ॥

अन्यच्च ।

15　पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं दूषणानि महीभुजाम् ॥ १२३ ॥

किं च ।

न साहसैकान्तरसानुवर्तिना
न चाप्युपायोपहतान्तरात्मना ।
20　विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्ये च वसन्ति संपदः ॥ १२४ ॥

त्वया स्वबलोत्साहमवलोक्य साहसैकरसिकेन मयोपन्यस्तेष्वपि मन्त्रेष्वनवधानं वाक्पारुष्यं च कृतम् । अतो दुर्नीतेः फलमिदमनुभूयते । तथा चोक्तम्—

दुर्मन्त्रिणं कमुपयान्ति न नीतिदोषाः ?
संतापयन्ति कमपथ्यभुजं न रोगाः ? 5
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः ?
कं स्त्रीकृता न विषयाः परितापयन्ति ? ॥१२५॥

मुदं विषादः शरदं हिमागमः
तमो विवस्वान् सुहृदं कृतघ्नता ।
विशुद्धबुद्धिः शुचमापदं नयः 10
श्रियं समृद्धामपि हन्ति दुर्नयः ॥ १२६ ॥

ततो मयाप्यालोचितम्—'प्रज्ञाहीनोऽयं राजा । कथमन्यथा मम नीतिशास्त्रकथाकौमुदीं वागुल्काभिस्तिमिरयति । यतः ।

यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ?
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ? ॥१२७॥ 15

तेनाहमपि तूष्णीं स्थितः ।

अथ राजा बद्धाञ्जलिराह—'तात, अस्ति ममापराधः । इदानीमवशिष्टबलसहितोऽपि विन्ध्याचलं यथा गमिष्यामि, तथोपदिश ।' गृध्रः स्वगतं चिन्तयति—'कर्तव्योऽत्र प्रतीकारः ।' यतः ।

देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च । 20
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च ॥ १२८ ॥

मन्त्री विहस्य ब्रूते—'देव, मा भैषीः। समाश्वसिहि। शृणु देव,

मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके।
कर्मणि व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः ॥१२९॥

अपरं च।

5 आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः ॥ १३० ॥

तदत्र भवत्प्रतापादेव दुर्गं भङ्क्त्वा कीर्तिप्रतापसहितं त्वामचिरेण कालेन विन्ध्याचलं नेष्यामि।' राजाह—'कथमधुना स्वल्पबलेन तत्संपद्यते।' गृध्रो वदति—'देव, सर्वं भविष्यति। 10 यतः। विजिगीषोर्दीर्घसूत्रता विजयसिद्धेरवश्यंभाविलक्षणम्। तदद्य दुर्गद्वाररोधो विधीयताम्।'

प्रहितप्रणिधिना बकेनागत्य हिरण्यगर्भस्य तत्कथितम्—'देव, स्वल्पबल एवायं राजा चित्रवर्णो गृध्रस्य मन्त्रोपष्टम्भेन दुर्गावरोधं करिष्यति।' राजहंसो ब्रूते—'सर्वज्ञ, किमधुना 15 विधेयम्?' चक्रवाको वदति—'स्वबले सारासारविचारः क्रियताम्। ज्ञात्वा स्वर्णवस्त्रादि यथार्हं प्रसाददानं च क्रियताम्। यतः।

यः काकिनीमप्यपथप्रपन्नां
समुद्धरेन्निष्कसहस्रतुल्याम्।
कालेषु कोटिष्वपि मुक्तहस्त-
20 स्तं राजसिंहं न जहाति लक्ष्मीः ॥ १३१ ॥

अन्यच्च।

क्रतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसंग्रहे ।
प्रियासु नारीष्वधनेषु बान्धवे-
ष्वतिव्ययो नास्ति नराधिपाष्टसु ॥ १३२ ॥

यतः । 5

मूर्खः स्वल्पव्ययत्रासात् सर्वनाशं करोति हि ।
कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ॥१३३॥

राजाह—'कथमिदानीमतिव्ययो युज्यते?' उक्तं च—'आपदर्थं धनं रक्षेत्' इति । मन्त्री ब्रूते—'श्रीमतः कथमापदः ।' राजा—'कदाचित् कुपिता लक्ष्मीः?' मन्त्री पुनर्वदति— 10 'संचितार्थोऽपि नश्यति'। तद्देव, कार्पण्यं परित्यज्य स्वभटाः दानमानाभ्यां पुरस्क्रियन्ताम् । तथा चोक्तम्—

परस्परज्ञाः संतुष्टाः प्राणान् त्यक्तुं सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषां बलम् ॥१३४॥

अपरं च । 15

सुभटाः शीलसंपन्नाः संहताः कृतनिश्चयाः
अपि पञ्चशतं शूरा निघ्नन्ति रिपुवाहिनीम् ॥ १३५ ॥

किं च

शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः ।
त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मंभरिर्नरः ॥ १३६ ॥ 20

यतः ।

सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।

एतैस्त्यक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥१३७॥

ईदृशि प्रस्तावेऽमात्यास्तावदेव पुरस्कर्तव्याः । तथा चोक्तम्—

यो येन प्रतिबद्धः स्यात् सह तेनोदयी व्ययी ।
सुविश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३८ ॥

5 यतः ।

धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनाक्षिप्तः कार्याब्धौ स निमज्जति ॥ १३९ ॥

शृणु देव,

हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययस्तथा ।
10 नित्यं भृत्यानुपेक्षा च तस्य स्याद्धनदा धरा ॥ १४० ॥
येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।
अमात्या इति तान् राजा नावमन्येत् कदाचन ॥१४१॥

यतः ।

महीभुजो मदान्धस्य संकीर्णस्येव दन्तिनः ।
15 स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम् ' ॥ १४२ ॥

अथागत्य प्रणम्य मेघवर्णो ब्रूते—' देव, दृष्टिप्रसादं कुरु । एष युद्धार्थी विपक्षो दुर्गद्वारि तिष्ठति । तद्देवपादादेशाद्बहिर्निःसृत्य स्वविक्रमं दर्शयामि ।' तेन देवपादानामानृण्यमुपगच्छामि ।'

चक्रवाको ब्रूते—' मैवम् । यदि बहिर्निःसृत्य योद्धव्यं, तदा
20 दुर्गाश्रयणं निष्प्रयोजनम् ।

अपरं च ।

विषमो हि यथा नक्रः सलिलान्निस्सृतोऽवशः ।
वनाद्विनिर्गतः सत्यं सिंहोऽपि स्यात् सृगालवत् ॥१४३॥

वायसो ब्रूते—'देव, स्वयं गत्वा दृश्यतां युद्धम् । यतः ।

पुरस्कृत्य बलं राजा योधयेदवलोकयन् ।
स्वामिनाधिष्ठितः श्वाऽपि किं न सिंहायते ध्रुवम् ?' ॥१४४ 5

अथ ते सर्वे दुर्गद्वारं गत्वा महाहवं कृतवन्तः । अपरेद्युश्चित्रवर्णो राजा गृध्रमुवाच—'तात, यत्प्रतिज्ञातं तदधुना पालय ।' गृध्रो ब्रूते—'शृणु देव ।

अकालसहमत्यल्पं मूर्खव्यसनिनायकम् ।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते ॥ १४५ ॥ 10

तत्तावदत्र नास्ति ।

उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम् ।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे ॥ १४६ ॥

अत्र च यथाशक्ति क्रियते यत्नः । (कर्णे कथयति) । एवमेवम् ।' ततोऽनुदित एव भास्करे प्रातःकाले चतुर्ष्वपि द्वारेषु युद्धे प्रवृत्ते 15 दुर्गाभ्यन्तरे गृहे गृहे काकेनाग्निर्निक्षिप्तः । ततो गृहीतं गृहीतं दुर्गमिति कोलाहलं श्रुत्वाऽनेकगृहेषु पावकं प्रदीप्तं प्रत्यक्षेणावलोक्य राजहंसस्य सैनिकाः अन्ये च दुर्गवासिनः सत्वरं ह्रदं प्रविष्टाः । यतः ।

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् । 20
प्राप्तकाले यथाशक्ति कुर्यान्न तु विचारयेत् ॥ १४७ ॥

राजहंसः सुखी स्वभावान्मन्दगतिः सारसद्वितीयश्चित्रवर्ण-
स्य सेनापतिना कुक्कुटेनागत्य वेष्टितः । हिरण्यगर्भो राजाह—
'सेनापते, सारस, ममानुरोधादात्मानं कथं व्यापादयिष्यसि ?
त्वं गन्तुमधुनापि समर्थः । तद्गत्वा जलं प्रविश । मत्पुत्रं चूडा-
5 मणिनामानं सर्वज्ञस्य संमत्या राजानं कारयिष्यसि ।' सारसो
ब्रूते—'देव, न वक्तव्यमेवं दुस्सहं वचः । यावच्चन्द्रार्कौ दिवि
तिष्ठतः, तावद्विजयतां देवः । अहं पुनरेव दुर्गाधिकारी । तन्मम
मांसासृग्विलिप्तेन वर्त्मना प्रविशतु शत्रुः । अपरं च ।

क्षमी दाता गुणग्राही स्वामी भाग्येन लभ्यते ।'

10 राजाह—

'शुचिर्दक्षोऽनुरक्तश्च भृत्यः खलु सुदुर्लभः' ॥ १४८ ॥

सारसो ब्रूते—'शृणु देव,

यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
15 अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत ॥ १४९ ॥

अन्यच्च ।

भवेऽस्मिन् पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे ।
जायते पुण्ययोगेन परार्थे जीवितव्ययः ॥ १५० ॥

20 देव, त्वं च स्वामी सर्वथा रक्षणीयः । यतः ।

प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति ।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि ? ॥१५१॥

अपरं च ।

सर्वेश्वरे जगत्सर्वं निमीलति निमीलति ।
सूर्योदय इवाम्भोजं तत्प्रबोधे प्रबुध्यते ॥ १५२ ॥

अपि च ।

स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत् । 5
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥ १५३ ॥

अत्रापि प्रधानाङ्गं राजा ।

अथ कुक्कुटेनागत्य राजहंसस्य शरीरे खरतरनखाघातः कृतः । ततः सत्वरमुपसृत्य सारसेन स्वदेहान्तरितो राजा जले क्षिप्तः । अनन्तरं कुक्कुटनखप्रहारैर्जर्जरीकृतेन सारसेन कुक्कुट- 10 सेना बहुशो हताः । कुक्कुटोऽपि सेनापतेश्चञ्चुप्रहारेण व्यापादितः । पश्चात्सारसोऽपि बहुभिः पक्षिभिः संभूय व्यापादितः । अथ चित्रवर्णो राजा दुर्गं प्रविश्य, दुर्गावस्थितं द्रव्यं ग्राहयित्वा बन्दिभिर्जयशब्दैरानन्दितो बहिः स्कन्धावारं जगाम ॥

अथ राजपुत्रैरुक्तम्––'तस्मिन् राजहंसबलेऽसौ सारस 15 एव पुण्यवान् । येन स्वदेहदानेन राजा रक्षितः । यतः ।

जनयन्ति सुतान्गावः सर्वा एव गवाकृतीन् ।
विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम्' ॥ १५४ ॥

विष्णुशर्मणोक्तम्––'स्वभावतः स्वदेहेन क्रीतानक्षयलोकान् विद्याधरीपरिजनोऽनुभवतु महासत्त्वः । तथा चोक्तम्–– 20

आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः ।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः ॥ १५५ ॥

यत्र तत्र हतः शूरः शत्रुभिः परिवारितः ।
अक्षयान् लभते लोकान् यदि क्लैब्यं न गच्छति ॥१५६॥

विग्रहः श्रुतो भवद्भिः ।' राजपुत्रैरुक्तम्—'श्रुत्वा सुखिनो भूताः वयम् ।' विष्णुशर्माब्रवीत्—'अपरमप्येवमस्तु ।

5 विग्रहः करितुरङ्गपत्तिभि-
र्मा कदापि भवतां महीभुजाम् ।
नीतिमन्त्रपवनैः समाहताः
संश्रयन्तु गिरिगह्वरं द्विषः' ॥ १५७ ॥

इति हितोपदेशे विग्रहो नाम तृतीयः कथासंग्रहः समाप्तः ॥



पुनः कथारम्भकाले राजपुत्रैरुक्तम्—'आर्य, विग्रहः श्रुतोऽस्माभिः । संधिरधुनाभिधीयताम् ।' विष्णुशर्मणोक्तम्—'श्रूयताम् । संधिमपि कथयामि यस्यायमाद्यः श्लोकः—

वृत्ते महति संग्रामे राज्ञोर्निहतसेनयोः । 5
स्थेयोभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात् ॥ १ ॥

राजपुत्रा ऊचुः—'कथमेतत् ?' विष्णुशर्मा कथयति—

ततस्तेन राजहंसेनोक्तम्—'केनास्मद्दुर्गे निक्षिप्तोऽग्निः ?' किं पारक्येन किं वाऽस्मद्दुर्गवासिना केनापि विपक्षप्रयुक्तेन ?' चक्रवाको वदति—'देव, भवतो निष्कारणबन्धुरसौ मेघवर्णः सपरिवारो न दृश्यते । तन्मन्ये तस्य विचेष्टितमिदम् ।' राजा क्षणं विचिन्त्याह—'अस्ति तावदेवं मम दुर्दैवमेतत् । तथा 10

अपराधः स दैवस्य न पुनर्मन्त्रिणामयम् ।
कार्यं सुघटितं यत्नात् दैवयोगाद्विनश्यति' ॥ २ ॥ 15

मन्त्री ब्रूते—'उक्तमेतत् ।

विषमां हि दशां प्राप्य दैवं गर्हयते नरः
आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः ॥ ३

अपरं च ।

सुहृदां हितकामानां यो वाक्यं नाभिनन्दति । 20

स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति ॥ ४ ॥

अन्यच्च ।

रक्षितव्यं सदा वाक्यं वाक्याद्भवति नाशनम् ।
हंसाभ्यां नीयमानस्य कूर्मस्य पतनं यथा ' ॥ ५ ॥

5 राजाह—कथमेतत् ?' मन्त्री कथयति—

## कथा १ ।

अस्ति मगधदेशे फुल्लोत्पलाभिधानं सरः । तत्र चिरात् संकटविकटनामानौ हंसौ निवसतः । तयोर्मित्रं कम्बुग्रीवनामा कूर्मश्च प्रतिवसति । अथैकदा धीवरैरागत्य तत्रोक्तम्—' यदत्रा-
10 स्माभिरद्योषित्वा प्रातर्मत्स्यकूर्मादयो व्यापादयितव्याः । तदाकर्ण्य कूर्मो हंसावाह—' सुहृदौ, श्रुतोऽयं धीवरालापः ? अधुना किं मया कर्तव्यम् ?' हंसावाहतुः—' ज्ञायते । पुनस्तावत् प्रातर्यदुचितं तत्कर्तव्यम् ।' कूर्मो ब्रूते—' मैवं, यतो दृष्टव्यतिकरोऽहमत्र । तथा चोक्तम्—

15 अनागतविधाता च प्रत्युत्पन्नमतिस्तथा ।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति ' ॥ ६ ॥

तावाहतुः—' कथमेतत् ?' कूर्मः कथयति—

### ॥ अवान्तरकथा १ ॥

पुरा एतस्मिन्नेव सरस्येवंविधेषु धीवरेषूपस्थितेषु मत्स्यत्रये-
20 णालोचितम् । तत्रानागतविधाता नामैको मत्स्यः—' अहं तावज्जलाशयान्तरं गच्छामि ' इत्युक्त्वा ह्रदान्तरं प्रविष्टः । अपरेण

प्रत्युत्पन्नमतिनाम्ना मत्स्येनाभिहितम्—'भविष्यदर्थे प्रमाणाभावात् कुत्र मया गन्तव्यम् ? तदुत्पन्ने यथाकार्यं तदनुष्ठेयम् । तथा चोक्तम्—

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान् ।
वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा ॥ ७ ॥ 5

यद्भविष्यः—'कथमेतत् ?' इति पृच्छति । प्रत्युत्पन्नमतिः कथयति—

॥ अवान्तरकथा २ ॥

अस्ति विक्रमपुरे समुद्रदत्तो नाम वणिक् । तस्य रत्नप्रभा नाम वधूः केनापि स्वसेवकेन सह सदा रमते । यतः । 10

नैता रूपमपेक्षन्ते न चावयवनिश्चयम् ।
सुरूपं वा कुरूपं वा पुमानित्येव भुञ्जते ॥ ८ ॥

अन्यच्च ।

शास्त्रं सुनिश्चितनपि प्रतिचिन्तनीय-
मारधितो नरपतिः प्रतिशङ्कनीयः । 15
अङ्के स्थितापि युवतिः परिशङ्कनीया
शास्त्रे नृपे च युवतौ च कुतो वशित्वम् ॥ ९ ॥

अथैकदा तस्य मुखे चुम्बनं ददती सा समुद्रदत्तेनावलोकिता । ततो बन्धकी भर्तुः समीपं गत्वा प्राह—'नाथैतस्य महती निर्वृतिः । यतो युष्मदर्थं नीयमानं कर्पूरमश्नाति । अस्य वदने कर्पूरगन्धो मया घ्रातः ।' तच्छ्रुत्वा सेवकेन प्रकुप्योक्तम्—'यस्य स्वामिनो गृहे एतादृशी भार्या, तत्र सेवकेन कथं स्थातव्यम् ? 20

यत्र प्रतिक्षणं गृहिणी सेवकस्य मुखं जिघ्रति ।' ततोऽसावुत्थाय चलितः । ततोऽसौ साधुना यत्नात् संतोष्य रक्षितः । अतोऽहं ब्रवीमि—'उत्पन्नामापदं' इत्यादि ॥

ततो यद्भविष्येणोक्तम्—

5 'यदभावि न तद्भावि भावि चेन्न तदन्यथा ।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते ॥ १० ॥

ततः प्रातर्जालेन बद्धः प्रत्युत्पन्नमतिर्मृतवदात्मानं संदर्श्य स्थितः । ततो जालादपसारितो यथाशक्त्युत्प्लुत्य गम्भीरं नीरं प्रविष्टः । यद्भविष्यश्च धीवरैः प्राप्तो व्यापादितः ॥

10 अतोऽहं ब्रवीमि—'अनागतविधाता' इत्यादि । तद्यथाहमन्यह्रदं प्राप्नोमि तथा क्रियताम् ।' हंसावाहतुः—'जलाशयान्तरे प्राप्ते तव कुशलं । स्थले गच्छतः ते को विधिः ?' कूर्मो ब्रूते—'यथाहं भवद्भ्यां सहाकाशवर्त्मना यामि तथा विधीयताम् ।' हंसौ ब्रूतः—'कथमुपायः संभवति ?' कच्छपो वदति—
15 'युवाभ्यां चञ्चुधृतं काष्ठखण्डमेकं मया मुखेनावलम्ब्य गन्तव्यम् । युवयोः पक्षबलेन मयाऽपि सुखेन गन्तव्यम् ।' हंसौ ब्रूतः—'संभवत्येवमुपायः । किंतु ।

उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः' ॥ ११ ॥

20 कूर्मः पृच्छति—'कथमेतत् ?' तौ कथयतः—

॥ अवान्तरकथा ३ ॥

अस्त्युत्तरापथे गृध्रकूटो नाम पर्वतः । तत्रैव रेवातीरे न्यग्रोधपादपे बका निवसन्ति । तद्वृक्षस्याधस्ताद्विवरे सर्पस्तिष्ठति ।

स च तेषां बालापत्यानि खादति। अथ शोकार्तानां प्रलापं श्रुत्वा केनचिद्वृद्धबकेनोक्तम्—'एवं कुरुत। यूयं मत्स्यानानीय नकुलविवरात् सर्पविवरं यावत् पङ्क्तिक्रमेणैकैकशो मत्स्यानास्तीर्यागच्छत। ततस्तदाहारलुब्धैर्नकुलैरागत्य सर्वो द्रष्टव्यः स्वभावद्वेषात् सर्पविवरं दृष्ट्वा प्रविश्य स सर्पो हन्तव्यः।' तथाऽनुष्ठिते सति तैर्नकुलैस्तद्विवरं प्रविश्य सर्पो मारितः। ततो नकुलैर्वृक्षोपरिपाक्षिशावकानां रावः श्रुतः। अनन्तरं तद्वृक्षमारुह्य पश्यतां बकानां शावका भक्षिताः। अत आवां ब्रूवः—'उपायं चिन्तयन्' इत्यादि॥ आवाभ्यां नीयमानं त्वां दृष्ट्वा लोकैः किंचिद्वक्तव्यमेवाश्चर्यत्वात्। तदाकर्ण्य यदि त्वमुत्तरं ददासि तदा तव मरणं भविष्यति। तत्सर्वथात्रैव स्थीयताम्। कूर्मो वदति—'किमहमप्राज्ञः? नाहमुत्तरं दास्यामि। किमपि न वक्तव्यं मया।' तथानुष्ठिते सति, आकाशे नीयमानं तं कूर्ममालोक्य सर्वे गोरक्षकाः पश्चाद्धावन्ति वदन्ति च—'अहो महदाश्चर्यम्! पक्षिभ्यां कूर्मः समुह्यते।' तत्र कश्चिदाह—'यद्ययं कूर्मः पतति तदाऽत्रैव पक्त्वा खादितव्यो मया।' कोऽपि निगदति—'खण्डशोऽशं कृत्वा नेतव्यः' कश्चिदाह—'आलयं नीत्वा दग्ध्वा भक्षणीयः।' एवं दुस्सहं परुषवचनमाकर्ण्य कूर्मः क्रोधाद्विस्मृतपूर्वसंस्कारो 'युष्माभिर्भस्म भक्षितव्यम्' इति वदन् काष्ठात् पतितो गोरक्षकैर्व्यापादितः। अतोऽहं ब्रवीमि—'सुहृदां हितकामानाम्' इत्यादि॥

अथ प्रणिधिर्बकः तत्रागत्य तमुवाच—'देव, प्रागेव मया निवेदितं, दुर्गशोधनं प्रतिक्षणं कर्तव्यमिति। तच्च युष्माभिर्न

कृतम् । अतस्तदनवधानस्य फलमिदमनुभूतम् । दुर्गदाहश्चायं मेघवर्णनाम्ना वायसेन गृध्रप्रयुक्तेन कृतः ।' राजा निःश्वस्याह—

'प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु ।
प्रसुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते' ॥ १२ ॥

5 प्रणिधिरुवाच—'ततो दुर्गदाहं विधाय यदा गतो मेघवर्णः तदा चित्रवर्णेन प्रसादितेनोक्तम्—'अयं मेघवर्णोऽत्र कर्पूरद्वीपराज्ये-ऽभिषिच्यताम् । तथा चोक्तम्—

कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत् ।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत्' ॥ १३ ॥

10 चक्रवाको ब्रूते—'देव, श्रोतव्यं यत् प्रणिधिः कथयति' राजाह—'ततस्ततः ।' प्रणिधिरुवाच—ततः प्रधानमन्त्रिणा गृध्रेणोक्तम्—'देव, नेदमुचितम् । प्रसादान्तरं क्रियताम् । यतः ।

अविचारयतो युक्तिकथनं तुषखण्डनम् ।
नीचेषूपकृतं राजन् वालुकास्विव मुद्रितम् ॥ १४ ॥

15 अपरं च ।

महतामास्पदे नीचः कदापि न हि युज्यते ।
न हि चूडामणिस्थाने पादुका कैश्चिदिष्यते ॥ १५ ॥

तथा चोक्तम्—

नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति ।
20 मूषिको व्याघ्रतां प्राप्य मुनिं हन्तुं गतो यथा' ॥ १६ ॥

चित्रवर्णः पृच्छति—'कथमेतत् ?' गृध्रः कथयति—

## कथा २ ।

अस्ति गौतमस्य मुनेस्तपोवने महातपा नाम मुनिः । तेनाश्रमसन्निधाने मूषिकशावकः काकमुखाद्भ्रष्टो दृष्टः । तेन दयायुक्तेन नीवारकणैः संवर्धितः । तं च मूषिकं खादितुं यत्नादन्विष्यन् बिडालो मुनिना दृष्टः । ततो भीतो मूषिको मुनिना 5
तपःप्रभावाद्बलिष्ठो बिडालः कृतः । स बिडालः कुक्कुराद्बिभेति । ततोऽसौ कुक्कुरः कृतः । सोऽपि व्याघ्राद्बिभेति । ततोऽसौ व्याघ्रः कृतः । अथ व्याघ्रमपि तं मुनिर्मूषिकनिर्विशेषं पश्यति । अतः सर्वे तत्रस्था जनाः तं मुनिं दृष्ट्वा व्याघ्रं च वदन्ति—'अनेन मुनिना मूषिकोऽयं व्याघ्रतां नीतः ।' एतच्छ्रुत्वा व्याघ्रः स- 10
व्यथोऽचिन्तयत्—'यावदनेन मुनिना जीवितव्यं तावदिदं मम स्वरूपाख्यानमकीर्तिकरं न पलायिष्यते ।' इति समालोच्य मुनिं हन्तुं समुद्यतः । मुनिना तस्य चिकीर्षितं ज्ञात्वा 'पुनर्मूषिको भव' इत्युक्त्वा मूषिक एव कृतः ।

अतोऽहं ब्रवीमि—'नीचः श्लाघ्यपदं प्राप्य' इत्यादि । 15
अपरं च । सुकरमिदमिति न मन्तव्यम् । शृणु ।

भक्षयित्वा बहून् मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः पश्चात् मृतः कर्कटसंग्रहात् ॥ १७ ॥

चित्रवर्णः पृच्छति—'कथमेतत् ?' मन्त्री कथयति—

## कथा ३ । 20

अस्ति मालवविषये पद्मगर्भाभिधानं सरः । तत्रैको वृद्धबकः सामर्थ्यहीन उद्विग्नमात्मानं दर्शयित्वा स्थितः । स च केन-

चित्कुलीरेण दृष्टः, पृष्टश्च—'किमिति भवानाहारपरित्यागेन तिष्ठति।' बकेनाभिहितम्—'मत्स्या मम जीवनहेतवः। मत्स्याश्चावश्यमेव प्रातः कैवर्तैर्व्यापादनीया इति वार्ता नगरोपान्ते मयाकर्णिता। ततो वर्तनाभावेनास्मन्मरणमुपस्थितमिति ज्ञात्वा 5 आहारेऽपि मन्दादरो वर्ते।' ततो मत्स्यैरालोचितम्—'इह समये तावदुपकारक एवायं लक्ष्यते। तदयमेव यथाकर्तव्यं पृच्छ्यताम्। तथा चोक्तम्—

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः' ॥ १८ ॥

10 मत्स्या ऊचुः—'भो बक, अस्माकं कुत्र रक्षणोपायः।' बको ब्रूते—'अस्ति रक्षणोपायः जलाशयान्तराश्रयणम्। तत्रैकैकशोऽहं युष्मान्नयामि।' मत्स्यैरपि भयादुक्तम्—'एवमस्तु।' ततोऽसौ दुष्टबकस्तान्मत्स्यानेकैकशो नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति—'ते मया जलाशयान्तरे स्थापिताः।' 15 अनन्तरं कुलीरस्तमुवाच—'भो बक, मामपि तत्र नय।' ततो बकोऽप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान्। कुलीरोऽपि मत्स्यकण्टकाकीर्णां भूमिं दृष्ट्वाऽचिन्तयत्—'हा, हतोऽस्मि मन्दभाग्यः। भवत्विदानीं समयोचितं व्यवहरिष्यामि।' इत्यालोच्य कुलीरस्तस्य बकस्य ग्रीवां चिच्छेद। स च पञ्चतां 20 गतः। अतोऽहं ब्रवीमि—'भक्षयित्वा बहून् मत्स्यान्' इत्यादि ॥

ततः पुनश्चित्रवर्णो ब्रूते—'शृणु तावन्मन्त्रिन्, मयैतदालोचितमस्ति। अत्रावस्थितेनानेन मेघवर्णेन राज्ञा यावन्ति

कर्पूरद्वीपस्योत्तमवस्तूनि तावन्त्यस्माकमुपनेतव्यानि । तेन महता विलासेनास्माभिर्विन्ध्याचले स्थातव्यम् ।' दूरदर्शी विहस्याह— 'देव,

अनागतवतीं चिन्तां यस्तु कृत्वा प्रहृष्यति ।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा' ॥ १९ ॥ 5

राजाह—'कथमेतत् ?' मन्त्री कथयति—

## कथा ४ ।

अस्ति देवकोट्टनाम्नि नगरे देवशर्मा नाम ब्राह्मणः । तेन महाविषुवत्संक्रान्तौ सक्तुपूर्णशराव एकः प्राप्तः । ततस्तमादायासौ भाण्डपूर्णे कुम्भकारमण्डपस्यैकदेशे शयने क्षिप्तदेहः, सक्तु- 10 रक्षार्थं हस्ते दण्डमेकमादाय रात्रावचिन्तयत्—'यद्यहमिमं सक्तुशरावं विक्रीय दश कपर्दकान् प्राप्स्यामि तदात्रैव तैः कपर्दकैर्घटशरावादिकमुपक्रीयानेकथा प्रवृद्धैर्धनैः पुनः पुनः पूगवस्त्रादिकमुपक्रीय विक्रीय लक्षसंख्यानि धनानि कृत्वा विवाहचतुष्टयं करिष्यामि । तासु सपत्नीषु या रूपवती तस्यामधिकानुरागं 15 करिष्यामि । सपत्न्यो यदा द्वन्द्वं करिष्यन्ति तदा कोपाकुलोऽहं ता लगुडेन ताडयिष्यामि ।' इत्यभिधाय तेन लगुडः प्रक्षिप्तः । सक्तुशरावश्चूर्णितः, भाण्डानि च बहूनि भग्नानि । ततस्तेन शब्देनागतेन कुम्भकारेण तथाविधानि भाण्डान्यवलोक्य ब्राह्मणस्तिरस्कृतो मण्डपाद्बहिष्कृतश्च । 20

अतोऽहं ब्रवीमि—'अनागतवतीं चिन्ताम्' इत्यादि ॥

ततो राजा रहसि गृध्रं मन्त्रिणं पप्रच्छ—'तात, यथा कर्तव्यं तथोपदिश' इति । गृध्रो वदति—

'मदोद्धतस्य नृपतेः संकीर्णस्येव दन्तिनः ।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम् ॥ २० ॥

देव, किमस्माभिर्बलदर्पाद्दुर्गं भग्नम्? न। किंतु तव प्रतापाधिष्ठितेनोपायेन।' राजाह—'भवतामुपायेन।' गृध्रो ब्रूते—'यद्यस्मद्वचनं क्रियते, तदा स्वदेशं गम्यतामधुना, अन्यथा वर्षाकाले प्राप्ते तुल्यबलेनानेन सह पुनर्विग्रहे सत्यस्माकं परभूमिष्ठानां स्वदेशगमनमपि दुर्लभं भविष्यति। सुखशोभार्थं संधाय गम्यताम्। दुर्गं भग्नं। कीर्तिश्च लब्धैव। मम संमतं तावदेतत्। यतः।

यो हि धर्मं पुरस्कृत्य हित्वा भर्तुः प्रियाप्रियम्।
अप्रियाण्याह तथ्यानि तेन राजा सहायवान् ॥ २१ ॥

परं तु।

सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च।
युधि संदेहदोलास्थं को हि कुर्यादबालिशः?' ॥ २२ ॥

अन्यच्च।

संधिमिच्छेत्समेनापि संदिग्धो विजयो युधि।
सुन्दोपसुन्दावन्योन्यनष्टौ तुल्यबलौ न किम्? ॥ २३ ॥

राजोवाच—'कथमेतत्?' मन्त्री कथयति—

## कथा ५।

पुरा दैत्यौ महोदारौ सुन्दोपसुन्दनामानौ महता कायक्लेशेन त्रैलोक्यराज्यकामनया चिराच्चन्द्रशेखरमाराधितवन्तौ। ततस्तयोर्भगवान् परितुष्टः सन् 'वरं वरयतम्' इत्युक्तवान्। अनन्तरं तयोः समधिष्ठितया सरस्वत्या तावन्यद्वक्तुकामावन्यदभिहितवन्तौ।

'यद्यावयोर्भगवान् संतुष्टस्तदा स्वप्रियां पार्वतीं परमेश्वरो ददातु । अथ भगवता क्रुद्धेन वरप्रदानस्यावश्यकतया पार्वती दत्ता । ततस्तस्या रूपलावण्यलुब्धाभ्यां जगद्भ्रातिभ्यां मनसोत्सुकाभ्यां पापतिमिराभ्यां ममेयं ममेयमित्यन्योन्यं कलहायमानाभ्यां प्रमाणपुरुषः कश्चित्पृच्छ्यतामिति मतौ कृतायां स एव भर्ता वृद्ध- 5
द्विजरूपी समागत्य तत्रोपस्थितः । अनन्तरम् 'आवाभ्यामियं स्वबललब्धा । कस्येयमावयोर्भवति ?' इति ब्राह्मणमपृच्छताम् । ब्राह्मणो ब्रूते—

'वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि ।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया ॥ २४ ॥ 10

तद्युवयोः क्षत्रधर्मानुगो युद्ध एव नियमः ।' इत्यभिहिते सति, साधूक्तमनेनेति कृत्वान्योन्यतुल्यवीर्यौ समकालेऽन्योन्यघातेन विनाशमुपगतौ ॥

अतोऽहं ब्रवीमि—'संधिमिच्छेत् समेनापि' इत्यादि ॥ राजाह—'प्रागेव किं नोक्तं भवद्भिः ?' मन्त्री वदति—'म- 15
द्वचनं किमवसानपर्यन्तं श्रुतं भवद्भिः ? तथापि मम संमत्या नायं विग्रहारम्भः । साधुगुणयुक्तोऽयं हिरण्यगर्भः न विग्राह्यः । तथा चोक्तम्—

सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान् बली ।
अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः ॥ २५ ॥ 20
सत्योऽनुपालयेत्सत्यं संधितो नैति विक्रियाम् ।
प्राणबाधेऽपि सुव्यक्तमार्यो नायात्यनार्यताम् ॥ २६ ॥

धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते ।
प्रजानुरागाद्धर्माच्च दुःखच्छेद्यो हि धार्मिकः ॥ २७ ॥
संधिः कार्योऽप्यनार्येण विनाशे समुपस्थिते ।
विना तस्याश्रयेणार्यो न कुर्यात् कालयापनम् ॥ २८ ॥
5 संहतत्वाद्यथा वेणुर्निबिडः कण्टकैर्वृतः ।
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा ॥ २९ ॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम् ।
प्रतिवातं नहि घनः कदाचिदुपसर्पति ॥ ३० ॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा ।
10 अनेकयुद्धजयिनः प्रतापादेव भुज्यते ॥ ३१ ॥
अनेकयुद्धविजयी संधानं यस्य गच्छति ।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ ३२ ॥

तदत्र बहुभिर्गुणैरुपेतः संधेयोऽयं राजहंसः ।'

चक्रवाकोऽवदत्—'सर्वमवगतम् । भो बक, व्रज त्वम् ।
15 तद्विशेषं पुनर्ज्ञात्वा गमिष्यसि ।' अथ हिरण्यगर्भः चक्रवाकं पृष्टवान्—'मन्त्रिन्, असंधेयाः कति ? ताञ्छ्रोतुमिच्छामि ।' मन्त्री ब्रूते—'देव, कथयामि ।

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुकजनो लुब्धो लुब्धजनस्तथा ॥ ३३ ॥
20 विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्तमन्त्रश्च देवब्राह्मणनिन्दकः ॥ ३४ ॥
दैवोपहतकश्चैव दैवचिन्तक एव च ।

दुर्भिक्षव्यसनोपेतो बलव्यसनसंकुलः ॥ ३५ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्च न ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३६ ॥
एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ३७ ॥ 5
बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति ।
युद्धायुद्धफलं यस्माद्दातुं शक्तो न बालकः ॥ ३८ ॥
उत्साहशक्तिहीनत्वात् वृद्धो दीर्घामयस्तथा ।
स्वैरेव परिभूयेते द्वावप्येतावसंशयम् ॥ ३९ ॥
सुखच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः । 10
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ४० ॥
भीरुर्युद्धपरित्यागात् स्वयमेवापगच्छति ।
तथैव भीरुकजनः संग्रामे तैर्विमुच्यते ॥ ४१ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुजीविनः ।
लुब्धोऽनुजीविकैरेव दानभिन्नैर्निहन्यते ॥ ४२ ॥ 15
संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥ ४३ ॥
अनेकचित्तमन्त्रश्च द्वेष्यो भवति मन्त्रिणाम् ।
अनवस्थितचित्तत्वात्कार्ये तैः स उपेक्ष्यते ॥ ४४ ॥
सदा धर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः । 20
विशीर्यते स्वयं ह्येव दैवोपहतकस्तथा ॥ ४५ ॥
संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन्नात्मानमपि चेष्टते ॥ ४६ ॥

दुर्भिक्षव्यसनी चैव स्वयमेवावसीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४७ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ४८ ॥
बहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवासौ विपद्यते ॥ ४९ ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ५० ॥
सत्यधर्मव्यपेतेन न संदध्यात् कदाचन ।
स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ५१ ॥

अपरमपि कथयामि । संधिविग्रहासनयानसंश्रयद्वैधीभावाः षड्गुणाः । कर्मणामारम्भोपायः पुरुषद्रव्यसंपत् देशकालविभागो विनिपातप्रतीकारः कार्यसिद्धिश्चेति पञ्चाङ्गो मन्त्रः । सामदानभेददण्डाश्चत्वार उपायाः । उत्साहशक्तिः, प्रभुशक्तिः, मन्त्रशक्तिश्चेति शक्तित्रयम् । एतत्सर्वमालोच्य नित्यं विजिगीषवो भवन्ति महान्तः । यतः ।

या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदां गेहे चञ्चलापि प्रधावति ॥ ५२ ॥

तथा चोक्तम् ।

वित्तं यदा यस्य समं विभक्तं
गूढश्च चारो निभृतश्च मन्त्रः ।
न चाप्रियं प्राणिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति ॥ ५३ ॥

किंतु, यद्यपि महामन्त्रिणा गृध्रेण संधानमुपन्यस्तं, तथापि तेन राज्ञा संप्रति जयगर्वान्न मन्तव्यम् । देव, तदेवं क्रियताम् । अस्मन्मित्रं सिंहलद्वीपस्य महाबलो नाम सारसो राजा जम्बूद्वीपे कोपं जनयतु । यतः ।

सुगुप्तिमाधाय सुसंहतेन
बलेन वीरो विचरन्नरातिम् ।
संतापयेद्येन समं सुतप्त-
स्तप्तेन संधानमुपैति तप्तः ' ॥ ५४ ॥

ततो राज्ञा 'एवमस्तु' इत्युक्त्वा विचित्रो नाम बकः सुगुप्तलेखं दत्त्वा सिंहलद्वीपं प्रस्थापितः ।

अथ प्रणिधिः पुनरागत्योक्तवान्—'देव, श्रूयतां तत्रत्यः प्रस्तावः । एवं तत्र गृध्रेणोक्तम्—'देव, मेघवर्णस्तत्र चिरमुषितः । स वेत्ति किं संधेयगुणयुक्तो हिरण्यगर्भो राजा, न वेति ।' ततोऽसौ समाहूय राज्ञा पृष्टः—'वायस, कीदृशोऽसौ हिरण्यगर्भो राजा ? चक्रवाको मन्त्री वा कीदृशः ?' मेघवर्ण उवाच—'देव, स हिरण्यगर्भो राजा युधिष्ठिर इव महाशयः, सत्यवाक् । चक्रवाकसमो मन्त्री न क्वाप्यवलोक्यते ।' राजाह—'यद्येवं तथा कथमसौ त्वया वञ्चितः ?' मेघवर्णो ब्रूते—

'विश्वासं प्रतिपन्नानां वञ्चने का विदग्धता
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥ ५५ ॥

शृणु देव, तेन मन्त्रिणाहं प्रथमदर्शने विज्ञातः । किंतु, महाशयोऽसौ राजा । तेन मया विप्रलब्धः । तथा चोक्तम्—

आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम् ।
स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा' ॥ ५६ ॥

राजाह—'कथमेतत् ?' मेघवर्णः कथयति—

कथा ६ ।

5 'अस्ति गौतमारण्ये प्रस्तुतयज्ञः कश्चिद्ब्राह्मणः । स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे नीत्वा गच्छन् धूर्तत्रयेणावलोकितः । ततस्ते धूर्ताः 'यद्येष च्छागः केनाप्युपायेन लभ्यते, तदा मतिप्रकर्षो भवति ।' इत्यालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रतीक्ष्य पथि स्थिताः । तत्रैकेन धूर्तेन गच्छन्
10 स ब्राह्मणोऽभिहितः—'भो ब्राह्मण, किमिति कुक्कुरः स्कन्धेनोह्यते ?' विप्रेणोक्तम्—'नायं श्वा, किंतु यज्ञच्छागः ।' अथानन्तरस्थितेनान्येन धूर्तेन तथैवोक्तम् । तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कन्धे कृत्वा डोलायमानमतिश्चलितः । यतः ।

15 मतिर्डोलायते नूनं सतामपि खलोक्तिभिः ।
ताभिर्विश्वासितो योऽसौ म्रियते चित्रकर्णवत् ॥ ५७ ॥

राजा पृच्छति—'कथमेतत् ?' स कथयति—

कथा ७ ।

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः । तस्यानु-
20 चरास्त्रयः काको व्याघ्रः सृगालश्च । अथ तैर्भ्रमद्भिः कश्चिदुष्ट्रो दृष्टः पृष्टश्च—'कुतो भवानागतः ?' स चात्मवृत्तान्तमकथयत् ।

ततस्तैर्नीत्वा सिंहेऽसौ समर्पितः । तेनाभयवाचं दत्वा चित्रकर्ण इति नाम कृत्वा स्थापितः । एवं कालो गच्छति ॥

अथ कदाचित् सिंहस्य शरीरवैकल्यात् भूरिवृष्टिकारणाच्च आहारमलभमानास्ते व्यग्रा बभूवुः । ततः काकव्याघ्रगोमायुभिरालोचितम्—'चित्रकर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयताम् । किमनेन कण्टकभुजा ?' व्याघ्रो ब्रूते—'स्वामिनाभयवाचं दत्त्वा गृहीतोऽयम्, कथमेवं संभविष्यति ?' वायसो वदति—'इह समये परिक्षीणः स्वामी, पापमपि करिष्यति । यतः ।

त्यजेत् क्षुधार्ता महिलापि पुत्रं
खादेत् क्षुधार्ता भुजगी स्वमण्डम् ।
बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ॥ ५८ ॥

अन्यच्च ।

मत्तः प्रमत्तश्चोन्मत्तः शान्तः क्रोधी बुभुक्षितः ।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित्'

इति निश्चित्य सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम्—'आहारार्थं प्राप्तं किंचित् ?' काको ब्रूते—'देव, यत्नादपि किंचिन्न प्राप्तम् ।' सिंहोऽवदत्—'कोऽधुना जीवनोपायः ?' काको वदति—स्वाधीनाहारपरित्यागात् सर्वनाशोऽयमुपस्थितः ।' सिंहेनोक्तम्—'अत्राहारः कः स्वाधीनः ?' काकः कर्णे कथयति 'चित्रकर्ण' इति । सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । 'अभयवाचं दत्वा धृतोऽयमस्माभिः । कथमेवं युज्यते ? तथा चोक्तम्—

न गोप्रदानं न च भूमिदानं
न चान्नदानं न पयःप्रदानं ।
यथा वदन्तीह महाप्रदानं
सर्वेषु दानेष्वभयप्रदानम् ॥ ५९ ॥

अन्यच्च ।

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम् ।
तत्फलं लभते सम्यग्रक्षिते शरणागते' ॥ ६० ॥

काको ब्रूते—नासौ स्वामिना व्यापादयितव्यः । किंत्वस्माभिरेव तथा कर्तव्यं यथासौ स्वदेहदानमङ्गीकरोति ।' तच्छ्रुत्वा सिंहस्तूष्णीं स्थितः । ततोऽसौ लब्धावकाशः कूटं कृत्वा सर्वानादाय सिंहसमीपमागतः । अथ काकेनोक्तम्—'देव, यत्नादप्याहारो न प्राप्तः । अनेकोपवासक्लिष्टः स्वामी । तदिदानीं मदीयमांसं समुपभुज्यताम् । यतः

स्वामिमूला भवन्त्येताः सर्वाः संपत्तयः खलु ।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम्' ॥ ६१ ॥

सिंहेनोक्तम्—'वरं प्राणपरित्यागो, न पुनरीदृशे कर्मणि प्रवृत्तिः ।' जम्बुकेनापि तथोक्तम् । ततः सिंहेनोक्तम्—'मैवम् ।' व्याघ्र उवाच—'मद्देहेन जीवतु स्वामी ।' सिंहेनोक्तम्—'न कदाचिदेवमुचितम् ।' अथ चित्रकर्णोऽपि जातप्रत्ययः, तथैवात्मदेहदानमाह । तद्वदन्नेव व्याघ्रेण कुक्षिं विदार्य व्यापादितः, सर्वैर्भक्षितश्च ।

अतोऽहं ब्रवीमि—'मतिर्दोलायते नूनम्' इत्यादि ॥
अनन्तरं पुनर्गच्छन् स ब्राह्मणस्तृतीयेन धूर्तेनोक्तः । 'भो ब्राह्मण, किमिति कुक्कुरं स्कन्धेन भवान्वहति?' तदाकर्ण्य ब्राह्मणः 'निश्चितमेवायं कुक्कुर' इति मत्वा च्छागं त्यक्त्वा स्नात्वा स्वगृहं ययौ । स च्छागस्तैर्धूर्तैर्नीत्वा भक्षितः । अतोऽहं ब्रवीमि—'आत्मौपम्येन यो वेत्ति' इत्यादि ॥ 5

राजाह—'मेघवर्ण, कथं त्वया शत्रुमध्ये सुचिरमुषितम्? कथं वा तेषामनुनयः कृतः?' मेघवर्ण आह—'देव, स्वामिकार्यार्थिना स्वप्रयोजनवशाद्वा किं न क्रियते । पश्य ।

लोको वहति किं राजन् न मूर्ध्ना दग्धुमिन्धनम् । 10
क्षालयन्नपि वृक्षांघ्रिं नदीवेला निकृन्तति ॥ ६२ ॥

तथा चोक्तम्—

स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान् ।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः ॥ ६३ ॥

राजाह—'कथमेतत्?' मेघवर्णः कथयति— 15

## कथा ८ ।

अस्ति जीर्णोद्याने मन्दविषो नाम सर्पः । सोऽतिजीर्णतया स्वाहारान्वेषणेऽप्यक्षमः सरस्तीरे पतित्वा स्थितः । ततो दूरात् केनचिन्मण्डूकेन दृष्टः पृष्टश्च—'किं स्वाहारं नान्विष्यसि' इति । सर्पो ब्रूते—'गच्छ, किं ते मम मन्दभाग्यस्य वृत्तान्तप्रश्नेन?' ततः संजातकौतुकः स भेकः 'सर्वथा कथ्यताम्' इत्याह । सर्पो ब्रूते—'ब्रह्मपुरवासिनः श्रोत्रियस्य कौण्डिन्यस्य 20

पुत्रो विंशतिवर्षदेशीयः सर्वगुणसंपन्नः दुर्दैवान्मम नृशंसस्वभावाहिदष्टः । तं पुत्रं सुशीलनामानं मृतमवलोक्य कौण्डिन्यः शोकेन पृथिवीतलेऽलुठत् । अनन्तरं ब्रह्मपुरवासिनः सर्वे बान्धवास्तस्य तत्रागत्योपविष्टाः ।' ततः कपिलो नाम स्नातकोऽवदत्—'अरे कौण्डिन्य, मूढोऽसि । तेनैवं विलपसि । शृणु ।

क्रोडे करोति प्रथमं यथा जातमनित्यता ।
धात्रीव जननी पश्चात् तथा शोकस्य कः क्रमः ॥ ६४ ॥

तथा च ।

क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः ।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥ ६५ ॥

अपरं च ।

कायः संनिहितापायः संपदः पदमापदाम् ।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥ ६६ ॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते ।
आमकुम्भ इवाम्भःस्थो विशीर्णः सन् विभाव्यते ॥ ६७ ॥
आसन्नतरतामेति जन्तोर्मृत्युर्दिने दिने ।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥ ६८ ॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः ।
ऐश्वर्यं प्रियसंवासो मुह्येत् तत्र न पण्डितः ॥ ६९ ॥
यथा काष्ठं च काष्ठं च समेयातां महोदधौ ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥ ७० ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति ।
विश्रम्य च पुनर्गच्छेत् तद्वद्भूतसमागमः ॥ ७१ ॥

अन्यच्च ।

पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते ।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिवेदना ॥ ७२ ॥
यावतः कुरुते जन्तुः संबन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ ७३ ॥
नायमत्यन्तसंवासः कस्यचित् कनचित् कचित्
अपि स्वेन शरीरेण किमुतान्यैः पृथग्जनैः ॥ ७४ ॥

अपि च ।

संयोगो हि वियोगस्य संसूचयति संभवम् ।
अनतिक्रमणीयस्य जन्म मृत्योरिवागमम् ॥ ७५ ॥ 10
अपातरमणीयानां संयोगानां प्रियैः सह ।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥ ७६ ॥

अपरं च ।

व्रजन्ति न निवर्तन्ते स्रोतांसि सरितां यथा ।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥ ७७ ॥ 15
सुखास्वादपरो यस्तु संसारे सत्समागमः ।
स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥ ७८ ॥
अत एव हि नेच्छन्ति साधवः सत्समागमम् ।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥ ७९ ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः । 20
अथ तान्येव कर्माणि ते चापि प्रलयं गताः ॥ ८० ॥

संचिन्त्य संचिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य ।

वर्षाम्बुसिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥ ८१ ॥

यामेव रात्रिं प्रथमामुपैति
गर्भे निवासी नरवीरलोकः ।
5 ततः प्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥ ८२ ॥

अथ संसारमविचारयतां शोकोऽयमज्ञानस्य प्रपञ्चः । पश्य

अज्ञानं कारणं न स्यात् वियोगो यदि कारणम् ।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ॥ ८३ ॥

10 तदत्रात्मानमनुसंधेहि । शोकचर्चां परिहर । यतः ।

अकाण्डपातजातानां गात्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधी' ॥ ८४ ॥

ततस्तद्वचनं निशम्य प्रबुद्ध इव कौण्डिन्य उत्थायाब्रवीत्— तदलमिदानीं गृहनरकवासेन । वनं गच्छामि ।' पुनः कपिलो
15 ब्रूते—

'वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥ ८५ ॥

20 यतः ।

दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः ।
समः सर्वेषु भूतेषु न लिङ्गं धर्मकारणम् ॥ ८६ ॥

उक्तं च ।

वृत्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम् ।
वाक्सत्यवचनार्थाय दुर्गाण्यपि तरन्ति ते ॥ ८७ ॥

तथा हि ।

आत्मा नदी भारतपुण्यतीर्था
सत्योदका शीलतटा दयोर्मिः ।
अत्राभिषेकं कुरु पाण्डुपुत्र
न वारिणा शुद्ध्यति चान्तरात्मा ॥ ८८ ॥

विशेषतश्च ।

जन्ममृत्युजराव्याधिवेदनाभिरभिप्लुतम् ।
संसारमिदमत्यन्तमसारं त्यजतः सुखम् ॥ ८९ ॥

यतः ।

दुःखमेवास्ति न सुखं यस्मात्तदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥ ९० ॥

कौण्डिन्यो ब्रूते—'एवमेव'। ततोऽहं तेन शोकाकुलेन ब्राह्मणेन शप्तः—'यद्यारभ्य मण्डूकानां वाहनं भविष्यसि' इति । अथ कश्चिद्ब्राह्मण उवाच—'कपिलोपदेशाद्विश्रान्तं ते हृदयम् । तथा हि । शृणु ।

सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
सद्भिः सहैव कर्तव्यः सतां सङ्गो हि भेषजम् ॥ ९१ ॥

अन्यच्च ।

कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
स्वभार्यां प्रति कर्तव्यः सैव तस्य हि भेषजम्' ॥ ९२ ॥

एतच्छ्रुत्वा स कौण्डिन्यः कपिलोपदेशामृतप्रशान्तशोकानलो यथाविधि दण्डग्रहणं कृतवान्। अतो ब्राह्मणशापान्मण्डूकान् वोढुमत्र तिष्ठामि। अनन्तरं तेन मण्डूकेन गत्वा मण्डूकनाथस्य जालपादनाम्नोऽग्रे तत्कथितम्। ततः समागत्य मण्डूकनाथस्तस्य
5 सर्पस्य पृष्ठमारूढवान्। स च सर्पस्तं पृष्ठे कृत्वा चित्रपदक्रमं बभ्राम। परेद्युश्चलितुमसमर्थं तं मण्डूकनाथोऽवदत्—'किमद्य भवान् मन्दगतिः?' सर्पो ब्रूते—'देवाहारविरहादसमर्थोऽस्मि।' मण्डूकनाथोऽवदत्—'अस्मदाज्ञया मण्डूकान् भक्षय।' ततो 'गृहीतोऽयं प्रसाद' इत्युक्त्वा क्रमशः स मण्डूकान् खादति।
10 अथ निर्मण्डूकं सरो विलोक्य मण्डूकनाथोऽपि तेन खादितः॥

अतोऽहं ब्रवीमि—'स्कन्धेनापि वहेच्छत्रून्' इत्यादि॥ 'देव, यात्विदानीं पुरावृत्ताख्यानकथनम्। सर्वथा संधेयोऽयं हिरण्यगर्भो राजा संधीयतामिति मे मतिः।' राजोवाच—'कोऽयं भवतो विचारः? यतो जितस्तावदयमस्माभिस्ततो
15 यद्यस्मत्सेवया वसति, तदास्ताम्। नो चेद्विगृह्यताम्।'

अत्रान्तरे जम्बूद्वीपादागत्य शुकेनोक्तम्—'देव, सिंहलद्वीपस्य सारसो राजा संप्रति जम्बूद्वीपमाक्रम्यावतिष्ठते।' राजा तं ससंभ्रममाह—'किं किम्?' शुकः पूर्वोक्तं कथयति। गृध्रो ब्रूते—'साधु रे चक्रवाक मन्त्रिन् सर्वज्ञ साधु।' राजा सकोप-
20 माह—'आस्तां तावदयं, गत्वा तं समूलमुन्मूलयामि।' दूरदर्शी विहस्याह—

'न शरन्मेघवत्कार्यं वृथैव घनगर्जितम् ।
परस्यार्थमनर्थं वा प्रकाशयति नो महान् ॥ ९३ ॥

अपरं च ।

एकदा न विगृह्णीयात् बहून् राजाऽभिघातिनः ।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नश्यते ध्रुवम् ॥ ९४ ॥ 5

'देव, किमितो विना संधानं गमनमस्ति ? तदास्मत्पश्चात् प्रकोपोऽनेन कर्तव्यः ।

योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ।
स तथा तप्यते मूढो ब्राह्मणो नकुलादिव' ॥ ९५ ॥

राजा पृच्छति—कथमेतत् ?' दूरदर्शी कथयति— 10

## कथा ९ ।

अस्त्युज्जयिन्यां माधवो नाम ब्राह्मणः । तस्य ब्राह्मणी प्रसूता बालापत्यरक्षणार्थं ब्राह्मणमवस्थाप्य स्नातुं गता । तस्मिन् काले ब्राह्मणाय राज्ञः पार्वणश्राद्धं दातुमाह्वानमागतम् । तच्छ्रुत्वा ब्राह्मणः सहजदारिद्र्यादचिन्तयत्—'यदि सत्वरं न गच्छामि, तदाऽन्यः 15 कश्चिच्छ्रुत्वा श्राद्धं ग्रहीष्यति ।

आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥ ९६ ॥

किंतु, बालकस्यात्र रक्षको नास्ति । तत् किं करोमि ? यातु । चिरकालपालितमिमं नकुलं पुत्रनिर्विशेषं बालकरक्षायां व्यवस्थाप्य 20 यामि ।' तथा कृत्वा गतः । ततस्तेन नकुलेन बालकसमीपमागच्छन् कृष्णसर्पो दृष्ट्वा व्यापाद्य कोपात्खण्डं खण्डं कृत्वा खा-

दितः । ततोऽसौ नकुलो ब्राह्मणमायान्तमवलोक्य रक्तविलिप्त-
मुखपादः सत्वरमुपागत्य ब्राह्मणस्य चरणयोर्लुलोठ । ततोऽसौ
ब्राह्मणस्तं तथाविधं दृष्ट्वा 'मम पुत्रोऽनेन भक्षित' इति बुद्ध्या
व्यापादितवान् । अनन्तरं यावदसावागत्य पश्यति, तावद्बालकः
5 सुस्थः, सर्पश्च व्यापादितः तदुपकर्तारं नकुलं निरूप्य महान्तं
सन्तापमवाप्तवान् ।

अतोऽहं ब्रवीमि—'योऽर्थतत्त्वमविज्ञाय' इत्यादि ॥

अपरं च ।

कामः क्रोधस्तथा लोभो मोहो मानो मदस्तथा ।
10 षड्वर्गमुत्सृजेदेनमस्मिन् त्यक्ते सुखी भवेत् ॥ ९७ ॥

राजाह—'मन्त्रिन्, एष ते निश्चयः ।' मन्त्री ब्रूते—'एवमेव ।
यतः ।

स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमा गुणाः ॥ ९८ ॥

15 तथा च

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम् ।
वृणुते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव संपदः ॥ ९९ ॥

20 तद्देव, यदिदानीमस्मद्वचनं क्रियते, तदा संधाय गम्यताम् । यतः ।

यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने ।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता' ॥१००॥

राजाह—'कथमेवं संभवति ?' मन्त्री ब्रूते—'देव, सत्वरं भविष्यति । यतः ।

मृद्घटवत् सुखभेद्यो दुस्संधानश्च दुर्जनो भवति ।
सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु संधेयः ॥ १०१ ॥

अपरं च । 5

अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ १०२ ॥

विशेषतश्चायं धर्मज्ञो राजा, सर्वज्ञो मन्त्री च । ज्ञातमेतन्मया पूर्वं मेघवर्णवचनात्, तत्कृतकार्यसंदर्शनाच्च । यतः ।

कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः । 10
तस्मात्परोक्षवृत्तीनां फलैः कर्म विभावयेत् ॥ १०३ ॥

राजाह—'अलमुत्तरोत्तरेण । यथाभिमतमनुष्ठीयताम् ।' ततो गृध्रो महामन्त्री 'तत्र तथार्हं कर्तव्यम्' इत्युक्त्वा दुर्गाभ्यन्तरं चलितः । ततः प्रणिधिबकेनागत्य राज्ञो हिरण्यगर्भस्य निवेदितम्—'देव, संधिं कर्तुं महामन्त्री गृध्रोऽस्मत्समीपमागच्छत् ।' राज- 15 हंसो ब्रूते—'मन्त्रिन्, पुनः संबन्धिना केनचिदत्रागन्तव्यम् ।' सर्वज्ञो विहस्याह—'देव, न शङ्कास्पदमेतत् । यतो महाशयोऽसौ दूरदर्शी । अथवा स्थितिरियं मन्दमतीनाम् । कदाचिच्छङ्कैव न क्रियते । कदाचित्सर्वत्र शङ्का । तथा हि ।

सरसि बहुशस्ताराच्छाये क्षणात् परिवञ्चितः 20
कुमुदविटपान्वेषी हंसो निशासु विचक्षणः ।
न दशति पुनस्ताराशङ्की दिवाऽपि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमवेक्षते ॥ १०४ ॥

दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १०५ ॥

तद्देव, यथाशक्ति तत्पूजार्थं रत्नोपहारादिसामग्री सज्जीक्रियताम् ।
तथाऽनुष्ठिते सति, गृध्रो मन्त्री दुर्गद्वाराच्चक्रवाकेणोपगम्य सत्कृ-
5 त्यानीय राजदर्शनं कारितो, दत्तासने चोपविष्टः । चक्रवाक
उवाच—'युष्मदायत्तं सर्वम् । स्वेच्छयोपभुज्यतामिदं राज्यम् ।'
राजहंसो ब्रूते—'एवमेव ।' दूरदर्शी ब्रूते—'एवमेवैतत् । किं
त्विदानीं बहुप्रपञ्चनं निष्प्रयोजनम् । यतः ।

लुब्धमर्थेन गृह्णीयात् क्रुद्धमञ्जलिकर्मणा ।
10 मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥ १०६ ॥

अन्यच्च ।

सद्भावेन हरेन्मित्रं संभ्रमेण तु बान्धवान् ।
स्त्रीभृत्यौ दानमानैश्च दाक्षिण्येनेतरान् जनान् ॥ १०७ ॥

तदिदानीं संधाय गम्यताम् । महाप्रतापश्चित्रवर्णो राजा ।' चक्र-
15 वाको वक्ति—'यथा संधानं कार्यं, तदप्युच्यताम् ।' राजहंसो
ब्रूते—'कति प्रकाराः संधीनां संभवन्ति ?' गृध्रो वदति—
'कथयामि । श्रूयताम् ।

बलीयसाऽभियुक्तस्तु नृपो नान्यप्रतिक्रियः ।
आपन्नः संधिमन्विच्छेत् कुर्वाणः कालयापनम् ॥ १०८ ॥
20 कपाल उपहारश्च संतानः संगतस्तथा ।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥ १०९ ॥

अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः ।
परिक्रयस्तथोच्छिन्नस्तथा च परभूषणः ॥ ११० ॥
स्कन्धोपनेयसंधिश्च षोडशैते प्रकीर्तिताः ।
इति षोडशकं प्राहुः संधिं संधिविदो जनाः ॥ १११ ॥
कपालसंधिर्विज्ञेयः केवलं समसंधितः । 5
संप्रदानाद्भवति य उपहारः स उच्यते ॥ ११२ ॥
संतानसंधिर्विज्ञेयो दारिकादानपूर्वकः ।
सद्भिस्तु संगतः संधिर्मैत्रीपूर्व उदाहृतः ॥ ११३ ॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः ।
संपत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥ ११४ ॥ 10
संगतः संधिरेवायं प्रकृष्टत्वात् सुवर्णवत् ।
तथाऽन्यैः संधिकुशलैः काञ्चनः स उदाहृतः ॥ ११५ ॥
द्रव्यसिद्धिं समुद्दिश्य संधिश्च क्रियते यतः ।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥ ११६ ॥
मयास्योपकृतं पूर्वं ममाप्येष करिष्यति । 15
इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥ ११७ ॥
उपकारं करोम्यस्य ममाप्येष करिष्यति ।
अयं चापि प्रतीकारः रामसुग्रीवयोरिव ॥ ११८ ॥
एकार्थां सम्यगुद्दिश्य क्रियां यत्र हि गच्छति ।
स संहितप्रमाणस्तु स च संयोग उच्यते ॥ ११९ ॥ 20
आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति ।
यस्मिन्पणस्तु क्रियते स संधिः पुरुषान्तरः ॥ १२० ॥
त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति ।

यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुषः स्मृतः ॥ १२१ ॥
यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः ।
संधीयते संधिविद्भिरादिष्टः स उदाहृतः ॥ १२२ ॥
स्वसैन्येन तु संधानमात्मादिष्ट उदाहृतः ।
5 क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥ १२३ ॥
कोशांशेनार्धकोशेन सर्वकोशेन वा पुनः ।
शिष्टस्य प्रतिरक्षार्थं परिक्रिय उदाहृतः ॥ १२४ ॥
भुवां सारवतीनां तु दानादुच्छिन्न उच्यते ।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥ १२५ ॥
10 परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते ।
स्कन्धोपनेयं तं प्राहुः संधिं संधिविचक्षणाः ॥ १२६ ॥
परस्परोपकारस्तु मैत्री संबन्धजस्तथा ।
उपहारश्च विज्ञेयाश्चत्वारश्चैव संधयः ॥ १२७ ॥
एक एवोपहारस्तु संधिरेव मतो मम ।
15 उपहारविभेदास्तु सर्वे मैत्रविवर्जिताः ॥ १२८ ॥
अभियोक्ता बलीयस्त्वादलब्ध्वा न निवर्तते ।
उपहारादृते तस्मात् संधिरन्यो न विद्यते ॥ १२९ ॥

राजाह—'भवन्तो महापण्डिताः, तदत्रास्माकं यथाकार्यमुपदिश्यताम् ।' दूरदर्शी ब्रूते—'आः, किमेवमुच्यते ।

20 आधिव्याधिपरीतापैरद्य श्वो वा विनाशिने ।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥ १३० ॥
जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम् ।

तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत् ॥ १३१ ॥
मृगतृष्णोपमं वीक्ष्य संसारं क्षणभङ्गुरम् ।
सुजनैः संगतं कुर्याद्धर्माय च सुखाय च ॥ १३२ ॥

तन्मम संमतेन तदेव क्रियताम् । यतः ।

अश्वमेधसहस्राणि सत्यं च तुलया कृतम् । 5
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते ॥ १३३ ॥

अतस्सत्याभिधानदिव्यपुरस्सरयोरप्यनयोर्भूपालयोः काञ्चनाभिधानसंधिर्विधीयताम् ।' सर्वज्ञो वदति—'एवमस्तु ।' ततो वस्त्रोपहारादिना स मन्त्री दूरदर्शी पूजितः । प्रहृष्टमनाश्चक्रवाकं गृहीत्वा मयूरस्य राज्ञः समीपं गतः । तत्र चित्रवर्णेन राज्ञा 10 सर्वज्ञो गृध्रवचनाद्बहुमानदानपुरस्सरं संभाषितः तथाविधं संधिं स्वीकृत्य राजहंससमीपं प्रस्थापितः । दूरदर्शी ब्रूते—'देव, सिद्धं नः समीहितम् । इदानीं स्वस्थानमेव विन्ध्याचलं प्रतिगम्यताम् ।' अथ सर्वे स्वस्थानं प्राप्य मनोऽभिलषितं फलं प्राप्नुवन्निति ।

विष्णुशर्मणोक्तम्—'अपरं किं कथयामि? तदुच्यताम् ।' 15 राजपुत्रा ऊचुः—'आर्य, तव प्रसादात् सकलराज्यव्यवहाराङ्गं ज्ञातम् । ततः सुखिनो भूता वयम् ।' विष्णुशर्मोवाच—'यद्यप्येवं, तथाऽपि अपरमपीदमस्तु—

संधिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा
सन्तः सन्तु निरापदः सुकृतिनां कीर्तिश्चिरं वर्धताम् । 20
नीतिर्वारविलासिनीव सततं वक्षःस्थले राजताम्
वक्त्रं चुम्बतु मन्त्रिणामहरहर्भूयान्महानुत्सवः' ॥१३४॥

अन्यच्चास्तु ।

प्रालेयाद्रेः सुतायाः प्रणयनिवसतिश्चन्द्रमौलिः स याव-
द्यावल्लक्ष्मीर्मुरारेर्जलद इव तडिन्मानसे विस्फुरन्ती ।
यावत्स्वर्णाचलोऽयं दवदहनसमो यस्य सूर्यः स्फुलिङ्ग-
5　स्तावन्नारायणेन प्रचरतु रचितः संग्रहोऽयं कथानाम् ॥१३५

अपरं च ।

श्रीमान् धवलचन्द्रोऽसौ जीयान्माण्डलिको रिपून् ।
येनायं संग्रहो यत्नाल्लेखयित्वा प्रचारितः ॥ १३६ ॥

इति हितोपदेशे संधिर्नाम चतुर्थः कथासंग्रहः समाप्तः ॥

समाप्तोऽयं हितोपदेशः ॥

शुभं भूयात् ॥



PRINTED AT THE SRI RAMA PRESS, MADRAS—1928.